# KHANDA KHĀDYAKAṀ

## BY BRAHMAGUPTA

WITH THE COMMENTARY CALLED VASANA-BHASHYA

BY ÂMARÂJA

EDITED WITH AN INTRODUCTION

BY

PANDIT BABUA MISRA JYOTISHACHARYYA,

LECTURER IN INDIAN ASTRONOMY AND MATHEMATICS,

CALCUTTA UNIVERSITY.




PUBLISHED BY THE

UNIVERSITY OF CALCUTTA

1925

DEDICATED

To the Revered Memory of

The late Hon'ble Justice Sir Asutosh Mookerjee

Saraswati, Kt., C.S.I.,

as an humble token of

the deep respect and gratitude of

the Author.

# खण्डखाद्यकं नाम करणम्

गणकचक्रचूडामणि-श्रीब्रह्मगुप्ताचार्यकृतम्

पण्डित-महादेवात्मज-आमराजशर्म्मकृतया
वासनाभाष्यनामिकया टीकया सहितम्।

कलकत्ता-विश्वविद्यालये ज्यौतिषगणिताध्यापकेन
श्रीकृष्णमिश्रापरनामक-श्रीबबुआमिश्रेण ज्यौतिषाचार्येण
एकमात्रादादर्शपुस्तकाद्यथामति संशोध्य संस्कृत्य च
सम्पादितम्।

कलकत्ता-विश्वविद्यालयेन संमुद्रा प्रकाशितम्।

शकाब्दाः

१८४६

---

# भूमिका ।

इतः पूर्वं कुत्राप्यमुद्रितस्य "खण्डखाद्यक" करणस्यास्य प्रकाशनावसरे यत्किञ्चिदिदमाख्यातुमावश्यकमस्ति । यत् कलकत्ता-विश्वविद्यालये प्रातःस्मरणीयानां श्रीमदाशुतोषमुखोपाध्यायानां प्रबन्धात् स्थापिते भारतीयज्यौतिषगणितानुसन्धानविभागे Indian Astronomy Research Department नियुक्तः श्रीमान् थिबो-साहिब महाशयो Dr. G. Thibaut C.I.E. मामानाय्य सहकारितया नियोज्य च वासनाभाष्यसहितमेतत् खण्डखाद्यकपुस्तकं—बहुना मूल्येनापरिमितेन श्रमेण च प्राप्तं—तदन्यानि च वरुणोपाध्याय, भट्टोत्पल, चतुर्वेदाचार्यपृथूदक-कृतटीकासहितखण्डखाद्यकपुस्तकानि छिन्नभिन्नानि बहुशः खण्डितानि च मह्यं समर्प्य सादरमवोचत् यत् "इदमामराजकृत-वासनाभाष्यपुस्तकं भारतवर्षे इदमेकमेवेति एतत्सहितं खण्डखाद्यकं प्रथमतः संशोध्य प्रकाशनार्हं सम्पाद्य मुद्रापयतु भवान् । अथ चैतस्य दुर्लभतमस्य म्रियमाणप्रायस्य वासनाभाष्यस्योद्धारे छिन्नभिन्नान्येतान्यपि पुस्तकानि यथाऽवसरं साहाय्यं दास्यन्ति" । अथैतत्समयात् प्रायः सार्धमासाभ्यन्तर एवोक्तः साहिबमहाशयो Dr. G. Thibaut C.I.E. यूरोपयात्रामकरोत्ततश्च मासचतुष्टयाभ्यन्तर एव महायात्रया विरराम ।

अथैतत्पुस्तकसम्बन्धि समस्तवृत्तं माननीय-श्रीमदाशुतोष-मुखोपाध्यायेभ्यो निवेद्याहं यथारुचि मुद्रणायैव तदादेशं चावापम् ।

पुस्तकमेतच्च केनाप्यविदुषा लेखकेन लिखितं चिरजीर्णं त्रुटितपत्रं लुप्ताक्षरं शतत्रयवर्षादन्यूनसामयिकमिति विलोक्य कया रीत्या पुस्तकमेतत् मुद्रापयितुं युज्यत इति बहुशो विविच्य आदर्शपुस्तकस्याक्षरशो

मुद्रणे तत्तत्स्थानीयसंशोधितपाठोल्लेखे च तावन्ति साङ्केतिकचिह्नानि पाठभेदाश्च भवेयुर्येषामवगमार्थमपि महान् परिश्रमः पाठकानां भवितेति स्थिरमकार्षम्। अतः शोधितपाठमेव मुद्रापयितुं प्रवृत्तस्तदादर्शपुस्तकस्य प्राचीनरीत्यनुसारिपदच्छेदादिनियमरहितस्य गद्यपद्यादिलेखनिर्विशेषस्य विशेषतोऽशुद्धिभाजनस्य कुत्रचिद्वाचयितुमक्षमस्य कुत्रचित् सर्वथैव लुप्ताक्षरस्य संशोध्य प्रतिलिपीकरणे बहवः शब्दा अक्षराणि च संशोधितानि योजितानि बहिष्कृतानि चेति न तेषां सर्वेषामुल्लेखं टिप्पणीषु भवितुमर्हतीति मत्वा यत्र मूलपुस्तकोक्तपाठस्यास्मत्संशोधितपाठेन सह यत्किञ्चिद्भेदेऽपि अर्थेऽनर्थसम्भावना तत्रैव "मूले ईदृशः पाठ" इति टिप्पण्यां व्यक्तमकरवं कुत्रचिच्च शोधितपाठमेव। यद्यप्यस्मत्कृतविनिमयस्थलेऽन्यादृशोऽपि विनिमयो भवितुमर्हति परमेतस्मान्नान्यः सुगमः पन्थाः पुस्तकस्यास्योपयोगीकरणाय विद्यत इत्यज्ञासिषमलिखंश्च बहुत्र मूलोक्तसूत्राणामुपपत्तीस्तदितरान् विशेषार्थांश्च।

अथ जगत्प्रसिद्ध-ब्रह्मगुप्ताचार्यकृतमेतत् करणं सपादसहस्रवार्षिकं तत्सामयिकक्रियाकलापोपयोगि ग्रहगत्यादिज्ञानबुभुक्षूणां मधुरभोज्यमिव खण्डखाद्यकं(१) सर्वैरप्यर्वाचीनैर्गाणितिकैः श्रीभास्कराचार्यादिभिश्च सुगमत्वेनाख्यातं(२) सादरमङ्गीकृतं च।

ब्रह्मगुप्तश्च आर्यभटसमयात् पश्चात् सार्धशतवर्षासन्नसामयिकस्तत्प्रतिस्पर्धी च आर्यभटमतानुसारि व्यवहरतां तात्कालिकजनाना-

(१) खाद्यं भक्ष्यविशेषः खण्डेनेक्षुरसविकारेण मिश्रितं खाद्यं खण्डखाद्यम्। संज्ञायां कः। इति वासनाभाष्ये।

(२) सिद्धान्तशिरोमणौ ग्रहगणिते पाताधिकारे भास्करः "क्रान्तिसाधने छात्राणां सुखार्थं स्थूलान्यपि पञ्चदशभागलभ्यानि क्रान्तिखण्डानि ब्रह्मगुप्ताद्यैः पठितानि—

क्रान्तिकला हिरमगुणास्त्रिखमुनयो द्विखदिशो वसुवार्काः।
द्वसुवसुविश्वे च खकृतमनवश्च चेपयुतवियुताः॥"

अयं श्लोकोऽस्यैव खण्डखाद्यकस्येति।

मुपकारायैव खण्डखाद्यकं करणमेतदकरोदिति तत्प्रथमद्वितीय *
श्लोकाभ्यां स्पष्टम्।

अथ चायमाचार्यः स्वकृतब्राह्मस्फुटसिद्धान्ते शतशोऽप्यार्यभट-दूषणानि प्रतिपाद्य "तद्दूषणानामियत्ता नास्ति" † इत्युक्त्वापि खण्डखाद्यकेऽस्मिन् एकस्मिन्नेव स्थले आर्यभटोक्तस्पष्टोक्तेरस्फुटत्वं तन्मन्दोच्चादिषु केषुचन किञ्चित् संस्कारदानं चेत्येव वदन् आर्यभट-मतानुसारि करणं चकारेति सर्वत्र प्रचरितार्यभटमतनिराकरणं व्यवहारकृतां जनानां मध्ये दुर्घटमासीदिति प्रकटीकरोति।

खण्डखाद्यकेऽस्मिन् विषयास्त्वेतरकरणग्रन्थोक्ताः सर्व एव संक्षेपे-णोक्ताः। वस्तुतस्तु एतस्मात् प्राचीनं करणं—यद्यपि ब्राह्मस्फुट-सिद्धान्ते बहूनां श्रीषेण-विष्णुचन्द्र-प्रद्युम्न-लाट-सिंहादीनां ‡ नामग्राहं खण्डनं वर्त्तते—आर्यभटीयतन्त्र, वराहमिहिरकृत-पञ्चसिद्धान्तिका-भिन्नं प्रायो नास्त्येवेति करणग्रन्थानामादर्शरूपं खण्डखाद्यकमेतदिति वक्तुं शक्यते। अत्रोक्तैरष्टाधिकारैः—तिथ्यधिकार, ग्रहाधिकार, त्रिप्रश्नाधिकार, चन्द्रग्रहण, सूर्यग्रहण, उदयास्त, शृङ्गोन्नति, ग्रह-युत्याख्यैरार्याशतकेन करणेन—प्रायः सर्वेऽपि व्यवहारोपयुक्ता ज्यौतिष-विषया विज्ञायन्ते।

---

* खण्डखाद्यके

वक्ष्यामि खण्डखाद्यकमाचार्यार्यभटतुल्यफलम्॥

प्रायेणार्यभटेन व्यवहारः प्रतिदिनं यतोऽशक्यः।

उद्वाहजातकादिषु तत्समफललघुतरोक्तिरतः॥

† ब्राह्मस्फुटसिद्धान्ते तन्त्रपरीक्षाध्याये-

आर्यभटदूषणानां संख्या वक्तुं न शक्यते यस्मात्।

तस्मादयमुद्देशो बुद्धिमताऽन्यानि योज्यानि॥१॥

‡ ब्राह्मस्फुटसिद्धान्ते तन्त्रपरीक्षाध्याये-

श्रीषेणविष्णुचन्द्रप्रद्युम्नार्यभटलाटसिंहानाम्।

ग्रहणादिविसम्वादात् प्रतिदिवसं सिद्धमज्ञत्वम्॥

अथैतस्मिन् खण्डखाद्यके वरुणोपाध्यायकृतटीकायामुल्लिखितानामष्टाधिकाराणामवसाने ब्राह्मस्फुटसिद्धान्तवदुत्तराध्यायाः—यथा मध्यगत्युत्तराध्यायः, स्पष्टगत्युत्तराध्यायः, त्रिप्रश्नोत्तराध्यायः—इत्येवमुल्लिखिताः कस्यचिदधिकारस्य एकेन सूत्रेण कस्यचिच्च द्वाभ्यां सूत्राभ्यामुत्तराध्याया उक्ता उदाहृताश्च। एतद्वासनाभाष्यकारेणामराजेन च तत्तत्स्थल एव तत्तदुत्तराध्यायोक्तविशेषा लिखिताः सवासनं व्याख्याताश्च। वस्तुतस्तु आर्यभटमतानुसारि करणं निर्माय "न स्फुटमार्यभटोक्तं स्पष्टीकरणं यतस्ततो वक्ष्ये" इति वत् दृग्गणितैक्यार्थमेव सर्वत्राप्युत्तराध्यायेऽनेके संस्कारा लिखिता ग्रन्थकारेण। ते चाष्टाधिकारात्मकग्रन्थसमाप्तनन्तरं उत तत्रैव तत्रैवेति नावगम्यते। भवतु यत्किमपि अधुना आमराजकृत-वासनाभाष्यं यावदुपलब्धं तदेव यथामति संशोध्य संस्कृत्य वा खण्डखाद्यकोक्तसमस्तविषयावगमक्षमं विधाय पुस्तकमेतत् प्रकाशयामि। अथ चैतस्मिन् वासनाभाष्ये "खण्डखाद्यकोत्तरे श्लोकाः" इत्येवमुल्लिखिता अनुष्टुप्छन्दोभिरुक्ता बहवः श्लोकाः खण्डखाद्यकोक्तसंक्षिप्तसाराधसूत्राणां व्याख्यानरूपा इव स्फुटोक्तयः गणितरीतिप्रदर्शका ये विद्यन्ते ते चैतद्वासनाभाष्यकर्तुरुपाध्यायेन त्रिविक्रमेण रचितस्य "खण्डखाद्यकोत्तर" स्येति एतत्करणानुसारी भिन्नो ग्रन्थ आसीदिति स्फुटमेव प्रतीयते।

अथैतत्खण्डखाद्यकोपरि लल्लस्य(१)—या च प्रायः खण्डखाद्यकपद्धतिनाम्ना (२) ख्याताऽऽसीत्—सोमेश्वरस्य, वरुणोपाध्यायस्य (३)

---

(१) आमराजकृत—वासनाभाष्ये १।४

लल्लोत्पलसोमेश्वरादिविरचितभाष्याणि तत्त्वतो वुद्ध्वा।

(२) आमराजकृत—वासनाभाष्ये २७।१

तथा च खण्डखाद्यपद्धतौ लल्लः। लङ्का कुमारी काञ्ची पाणाटा, कृष्णा श्वेतशैलो वात्स्यगुल्म उज्जयिनी इत्यादि। लल्लकृतखण्डखाद्यकभाष्यं खण्डखाद्यपद्धतिश्चेति नामध्यामेक एव ग्रन्थ आसीत् ग्रन्थद्वयं वेति न स्फुटीभवति।

(३) या चोदाहरणरूपा वर्त्तते।

भट्टोत्पलस्य, चतुर्वेदाचार्य-पृथूदकस्य, आमराजस्य, त्रिविक्रमस्ये-त्यादिका अनेकाष्टीकास्तदनुसारिग्रहाद्यानयनायानेका: (१) सारणी-श्चानेके विद्वांसश्चक्रिरे। यदेतत्खण्डखाद्यकोपर्य्यनेकाष्टीका: खण्डखाद्यपद्धति, खण्डखाद्यकोत्तर, खण्डखाद्यकसारणीत्यनेका: स्वतन्त्रग्रन्थाश्चेति ब्रह्मगुप्तोक्तखण्डखाद्यकसूत्राणामभिप्रायावगमाय तदनुमतग्रहाद्यानयनाय चानेके उपायास्तत्तत्सामयिकैर्गाणितिकै: कृता इति खण्डखाद्यकस्यास्य आर्षवन्मान्यं बोधयति। अत एव मैथिलकुलभूषणेन कविशेखराचार्येण ज्योतिरीश्वरठक्कुरेण कृते मैथिलीभाषया लिखिते "वर्णनरत्नाकरे *" ज्योतिर्विदां वर्णनप्रसङ्गे खण्डखाद्यकावगतेर्विशेषतो वर्णनमस्ति।

अथैतत्खण्डखाद्यकटीकासु कासुचिदुपलब्धास्वपि वासना-भाष्यस्यास्य विशेषत्वमिदमस्ति यदस्मिन् ज्यौतिषसिद्धान्तप्रतिपाद्य-विषयाणां सर्वेषामपि तथा प्रतिपादनमुपपादनं च तथा खण्डखाद्य-कोक्ताहर्गणादिसाधनविधेस्तथा वासनया स्थापनं च वर्त्तते यथा केवलमेतदेव वासनाभाष्यमधीत्य य: कश्चन ज्यौतिषसिद्धान्तस्य सामान्य-तया तदनु खण्डखाद्यकोक्तसूत्रोपपत्तेश्च सुतरां ज्ञाता भवितुमर्हति।

अथ चैतद्वासनाभाष्यकारिणामराजेन खण्डखाद्यकेऽयनचलन-चर्चायामसत्यामपि सायनेनैव रविणा क्रान्त्याद्यानयनं कर्त्तुमुच्यते

---

(१) ब्राह्मस्फुटसिद्धान्तस्य भूमिकायामस्मद्गुरुचरणा म०म० सुधाकरद्विवेदिन: ।"इदानी-मपि ब्रह्मगुप्तस्य करणग्रन्थो बहुत्र सिन्धु (पञ्जाब) देशे प्रसिद्ध:। तदीयकरणखण्डखाद्या-नुसारेण सारणीतो बहुत्र तद्देशे गणका: पञ्चाङ्गं च रचयन्ति" एतत्सारण्या एका प्रति: श्रीमदाशुतोष-मुखोपाध्यायेभ्योऽस्माभिरुपायनीकृता विश्वविद्यालयपुस्तकालये वर्त्तते।

* वर्णनरत्नाकरे "अथ ज्योतिर्विद्वर्णना। मानस, खण्डखाद्य, भास्वती, तिथिचक्र, सोमशेखर, विद्याधरीविलास, प्रभृति अनेक करणग्रन्थक व्युत्पन्न" अयं ज्योतिरीश्वरश्च विद्यापते: कवे: प्राचीन इतीत: षट्शतवर्ष: प्रथममासीदिति कलकत्ताविश्वविद्यालये मैथिली-भाषाध्यापकानां पण्डितप्रवर-श्रीबबुआजीशर्मणां मतम्।

तत्र वराहानुक्तेश्च कारणं तत्समये क्रान्तिचलनानुपलम्भ एव * "नवाधिकपञ्चशत ५०९ शाके वराहमिहिराचार्यो दिवं गतस्तस्मिंश्च समयेऽयनांशाभाव आसन्न एवेति" वदता स्वीक्रियते ।

अथ वासनाभाष्येऽस्मिन् ग्रन्थान्तराणां—ब्रह्मसिद्धान्तस्य, शिष्यधीवृद्धिदतन्त्रस्य, भट्टोत्पलस्य, आदित्यप्रतापसिद्धान्तस्य, प्रद्योतनसिद्धान्तस्य,आमराजगुरोस्त्रिविक्रमस्य, तत्कृतखण्डखाद्यकोत्तरस्य,राजमृगाङ्कस्य(१)पौलिशतन्त्रस्य, (२) लल्लकृतखण्डखाद्यपद्धतेः, सूर्यसिद्धान्तस्य, करणोत्तमस्य, वराहसंहितायाः, सिद्धान्तशिरोमणेः,—बहूनि वचनान्युपलभ्यन्ते । कुत्रचिच्चाज्ञातकर्तृनामान्यपि वचनानि विलोक्यन्ते ।

सूत्रोपपत्तयश्चात्र लल्लकृत "शिष्यधीवृद्धिदतन्त्र" मेवागममङ्गीकृत्य तदुक्तभगणादीनेवादाय लिखिता इति तथा चोक्तमज्ययैव वलनाद्यानयनोपपत्तिश्चेति तदानीं शिष्यधीवृद्धिदस्यैव आर्यभटमतानुसारित्वेन प्रसिद्धेरिति वा भवतु यत्किमपि तदुपपत्तयश्च प्रौढोपपादनाः सुगमा इति खण्डखाद्यकटीकास्वनेकासु सतीष्वपि इयमेव टीका आदरार्हा भविष्यतीति विचिन्त्यैव अन्यासु टीकासु मूलश्लोकानां न्यूनाधिक्यं तत्पौर्वापर्यं चानेकविधमपि विहाय लुप्तप्रायस्य मनोऽनुकूलस्यास्य आमराजकृतवासनाभाष्यस्यैव क्रमानुसरणं मुद्रणं च प्रथमतः कृतमिति ।

अथास्मिन् संस्करणे मुद्रणे चानेकास्त्रुटयो भविष्यन्त्येवेति स्वयमप्यहं जानामि किन्तु कदाऽपि कुत्राप्यमुद्रितस्य सम्प्रति नाममात्रेणाप्यपरिचितस्यास्य ग्रन्थस्य प्रथममुद्रण एव सावशेषं तन्मार्जितुं

---

* गणकतरङ्गिण्यामस्मद्गुरुचरणा म०म० श्रीसुधाकरद्विवेदिनः "वस्तुतः खण्डखाद्यककरणटीकायामामराजोक्तस्य" नवाधिकपञ्चशतसंख्यशाके ५०९ वराहमिहिराचार्यो दिवं गतः" इत्यस्य लेखस्य न किमपि प्रमाणम् ।

(१) भोजराज कृतस्य ।

(२) पुलिशाचार्यस्य, पौलिशतन्त्रस्येत्येकस्यैव ग्रन्थस्योत भिन्नस्येति नावगम्यते

न शक्यत इति खण्डखाद्यकं करणमिदमेकरूपं प्रकाशितमभूदित्येतावताऽपि सुधियां सन्तोषो भवितैवेति। अथ चैकस्मादादर्शपुस्तकादतिशीर्णजीर्णादपि चैतत्पुस्तकमेवं विधं विधातुं मुद्रापयितुं च यावान् श्रमो जातस्तावतैवैतादृशमन्यदपि किमपि विवरणं स्वातन्त्र्येण रचयितुं प्रतिपद्यते। तदेतादृशं सम्पादितं पुस्तकमधुना विलोक्यास्मन्मनसि स्वयमेव मोदो जायते तदितरे तुष्यन्तु हसन्तु वेति नास्माकं तादृशी वाञ्छा। यदिह खण्डखाद्यकमिदं तदभिप्रायप्रकाशकविवरणसहितमेकवारं विदुषां दृष्टिगोचरीभूयात् तत्पश्चाच्चानेकधाऽनेकैरनुसन्धातृभिर्विद्वद्भिः सर्वाङ्गसुन्दरं संस्करणमस्य प्राचीनतमस्य करणस्य भवितुमर्हतीति मत्वा नास्य प्रकाशने किमपि न्यूनतातारतम्यमकरवम्।

अथ च तन्मूलमादर्शपुस्तकमस्माभिर्विश्वविद्यालयसर्वस्वेभ्यो माननीयश्रीमदाशुतोषमुखोपाध्यायेभ्य उपायनीकृतं विश्वविद्यालयपुस्तकालये वर्त्तत एव। यदि कैरप्युत्साहिभिः पुस्तकान्तरमन्विष्योपलभ्य च मदादर्शपुस्तकेन सह पाठविसम्वादा विविच्येरन् तदैवास्य पुस्तकस्य सर्वथोद्धारो ममापि मनसि तेषां महानुभावानाममीमा कृतज्ञता भविष्यतीत्यलं पल्लवितेन।

यत् खण्डखाद्यकमिदं गणितार्षभूतं
श्रीब्रह्मगुप्तरचितं व्यवहारदक्षैः।
नानाविधैर्विवरणैरथ सारणीभिः
सर्वत्र सादरमतीव गृहीतमासीत् ॥१॥
सम्प्रत्यदः परिचितं प्रथितंम नाम्नै-
वासीत् कुतश्चिदिह गाणितिकाग्रणीनाम्।
तच्चाधुना विहितसंस्करणं मयैतत्
प्रत्यक्षमद्य निदधे सविधे बुधानाम् ॥२॥

सर्वज्ञतामुपगतस्य दिवं गतस्य
यस्याशुतोषविदुषो महनीयकीर्त्तेः ।
आदेशतः सदयतोऽपि चिराय लुप्त-
प्रायं प्रकाशितमभूदिति रत्नभूतम् ॥३॥

विश्वाभिनन्दितगुणेषु महत्तमेषु
तेष्वाशुतोषचरणेषु दिवं गतेषु ।
एतत् समर्पयति साञ्जलि साश्रुनेत्रः
श्रीकृष्णमिश्र इह यो बबुआभिधानः ॥४॥

---

कलकत्ता
५-८-२४ ।

खण्डखाद्यकस्य

## प्रकरणानुक्रमणिका ।



---

## विषयानुक्रमणिका ।

तत्र प्रथमे तिथ्यधिकारे—

अत्र संख्यारहितोत्तराध्यायश्लोकः १ एवमत्राधिकारे श्लोकसङ्ख्या २५

---

## द्वितीये ग्रहाधिकारे—



एवमत्राधिकारे श्लोकसंख्या २६

## तृतीये त्रिप्रश्नाधिकारे—



एवमत्राधिकारे श्लोकसङ्ख्या १८

## चतुर्थे चन्द्रग्रहणाधिकारे—

१–३ श्लो० रविचन्द्रयोः प्रतिचरणं मन्दनीचोच्चवृत्तपरिधिभागा भिन्ना इति उत्तराध्यायोक्तपरिधिस्पष्टीकरणेन दृग्गणितैक्यार्थं संस्कारविशेषः।

१ श्लो० स्फुटयो रविचन्द्रयोस्तिथ्यन्तकाले समलिप्तीकरणप्रकारस्तादृशचन्द्रस्य विक्षेपसाधनं च।

२ श्लो० रविचन्द्रयोस्तात्कालिकबिम्बानयनं भूच्छायासाधनं च।

३ श्लो० ग्रहणप्रमाणकथनं सर्वग्रहण, खण्डग्रहणादिनिर्णयश्च।

४ श्लो० ग्रहणस्थितिघटिकानयनं सर्वग्रहणे विमर्दघटीसाधनं च।

५ श्लो० ग्रहणस्थितिघटिकादीनां स्फुटीकरणम्।

१ श्लो० मध्यग्रहणादीनां कालप्रतिपादनार्थमुत्तराध्यायश्लोकः।

६ श्लो० इष्टकाले ग्रासप्रमाणकथनम्।

७ श्लो० परिलेखार्थमायनवलनस्याक्षवलनस्य च साधनं तद्द्वारा ग्रहणस्वरूपनिर्णयश्च।

१ श्लो० कलात्मकानां बिम्बानामङ्गुलात्मकीकरणाय उत्तराध्यायश्लोकः।

८ श्लो० ग्रहणकाले ग्राह्यग्राहकबिम्बादीनामङ्गुलात्मकीकरणम्।

१–२ श्लो० उत्तराध्यायोक्तो ग्रहणपरिलेखः।

१ श्लो० सूर्यचन्द्रग्रहणयोर्मानभेदेन आदेष्टव्यमनादेष्टव्यं च किं प्रमाणमित्युत्तराध्यायश्लोकः।

१ श्लो० ग्रस्तस्य बिम्बस्य वर्णनिर्देशार्थमुत्तराध्यायश्लोकः।

१-५ श्लो० पर्वानयनार्थमुत्तराध्यायस्य पञ्च श्लोका यत्र रविचन्द्रचन्द्रोच्चपातानां षाण्मासिकचालनादिप्रतिपादनम्।

एवमत्राधिकारे मूलश्लोकसङ्ख्या ८

उत्तराध्यायश्लोकसंख्यया १४ सहिता जाता श्लोकसंख्या २२।

---

## पञ्चमे सूर्य्यग्रहणाधिकारे—



---

## षष्ठ उदयास्ताधिकारे—



---

## सप्तमे शृङ्गोन्नत्यधिकारे—

## अष्टमे ग्रहयुत्यधिकारे—



एवमत्राधिकारे श्लोकसंख्या ९ ।

ग्रन्थे श्लोकसंख्या च ११५

---

केवलमियं मूलश्लोकोक्तविषयाणामनुक्रमणिका लिखिता । तत्र चानेके उत्तराध्यायश्लोकाः श्लोकाङ्कसंख्यारहिता वासनाभाष्यवत्लघ्वक्षरेण लिखिताश्चेति तेषामादर्शपुस्तके श्लोकसंख्याराहित्यमवलोक्यैवेति बोध्यम् ।

अथ चास्मिन् आमराजदैवज्ञकृत "वासनाभाष्ये" बहवो विशेषाः प्रसङ्गाल्लिखिता दर्शनीयाश्च सम्पूर्णपुस्तकावलोकनेनैव विदिता भवन्तीति नात्र तदनुक्रमणिका लिखितेति शिवम् ॥

---

# अथ सटीकं खण्डखाद्यकं * प्रारभ्यते ।

हरिहरहिरण्यगर्भानेकीभूतांस्तमोनुदे नत्वा ।
विवृणोमि खण्डखाद्यं जिष्णुसुतब्रह्मगुप्तकृतम् ॥१॥
लल्लोत्पलसोमेश्वरविरचितभाष्याणि तत्त्वतो बुद्ध्वा ।
एकीकृत्य तदर्थं सुखाय संक्षेपतो वक्ष्ये ॥२॥

ग्रन्थारम्भे ग्रन्थकृदादावेव प्रवक्तृश्रोतृणामात्मनश्च विघ्नोपशमायेष्टदेवतानमस्कारपूर्वं सान्वयाभिधानप्रतिपादनेन स्वविरचितकरणस्य सुस्वादुत्वादुपादेयत्वमभिधातुमार्यामाह ।

प्रणिपत्य महादेवं जगदुत्पत्तिस्थितिप्रलयहेतुम् ।
वक्ष्यामि खण्डखाद्यकमाचार्यार्यभटतुल्यफलम् ॥१॥

प्रणिपत्येति। † उत्पत्तिश्च स्थितिश्च प्रलयश्च उत्पत्तिस्थितिप्रलयाः। जगतां भुवनानां सृष्टिस्थितिसंहारास्तेषां हेतुं कारणभूतं भगवन्तं महादेवं नमस्कृत्य आर्यभटाचार्यप्रणीततन्त्रस्य समानफलं खण्डखाद्यकं नाम करणं वक्ष्यामीति सम्बन्धः। खाद्यं भक्ष्यविशेषः। खण्डेन इक्षुरसविकारेण मिश्रितं खाद्यं खण्डखाद्यम्।

---

* पण्डित—महादेवात्मज आमशर्मा खण्डखाद्यकवासनाभाष्यनामिकाया एतट्टीकाया रचयिता कुत्र कदावाऽऽसीदिति न ज्ञायते। बहुभिरयं आमराज इति नाम्ना कथ्यते।

† पुस्तकस्यास्य प्रथमपत्रं नष्टप्रायमासीदिति बहुधाऽर्थानुसन्धानेन सन्दर्भो मया योजित इति।

संज्ञायां कः । तदिह स्वल्पायासजनितग्रहगत्यवगमेन सुखादुत्वात् करणमपि तथोक्तम् । आचार्यश्चासावार्यभटश्चेति । उपादेयत्वमस्य आचार्योपपदेनार्यभटशब्देनात्रोक्तमिति ॥१॥

अथार्यभटतन्त्रेण तुल्यफलत्वादस्य करणेन किम् । आर्यभटएवास्ति । ब्रह्मगुप्ताचार्यस्य विना वृथाप्रयासेनैव साध्यस्य सिद्धत्वादित्याह ।

प्रायेणार्यभटेन व्यवहारः प्रतिदिनं यतोऽशक्यः ।
उद्वाहजातकादिषु तत्समफललघुतरोक्तिरतः ॥२॥

प्रायेण बाहुल्येन उद्वाहजातकादिषु विवाहजन्मयात्रागृहप्रवेशान्नप्राशनचौलमौञ्जीबन्धनाग्न्याधानादिकृत्येषु योऽयं ग्रहाणामुदयास्तवक्रमार्गादिसंस्थानपरिज्ञानादिको व्यवहारः स आर्यभटतन्त्रेणातिविस्तृतचिरकालसाध्यगणितत्वात् प्रतिदिनं प्रतिपादयितुमशक्योऽतोऽत्र तत्समफला लघुतरा उक्तिर्वचनं यस्य तादृशः स्वल्पग्रन्थः क्रियत इत्यध्याहार्यमिति ॥२॥

तत्र ग्रहगत्याद्यवगमस्याहर्गणमूलत्वात्तदानयनमार्यात्रयेणाह ।

शाकोऽगवसुशरोनोऽर्कगुणश्चैत्रादिमाससंयुक्तः ।
त्रिंशद्गुणस्तिथियुतः पृथगिषुसहितो द्विधा भक्तः ॥३॥
पञ्चोदधिनवमनुभिर्लब्धोनो भाजितः षड्गनन्दैः
लब्धाधिमासकदिनैरधिकोऽधो रुद्रसङ्गुणितः ॥४॥
स्वरनववेदयुतोऽधस्त्रागतिथिरुद्रैर्हृतः फलविहीनः ।
त्रिखनगहृतः फलावमरात्रोनोऽहर्गणोऽर्कादिः ॥५॥

शाकः शककालः । शका नाम म्लेच्छा राजानस्ते यस्मिन् काले विक्रमादित्येन व्यापादिताः स शकसम्बन्धी कालः शाक

इत्युच्यते। स च गोगैकगुणसंख्येषु कलियुगादेर्गतेषु सौरवर्षेषु विक्रमादित्यवर्षप्रवृत्तिकालाच्च पञ्चत्रिंशदधिकशतसङ्ख्येषु सौरवर्षेष्वतीतेषु चैत्रादौ प्रवृत्तोऽतो विक्रमवर्षप्रवृत्तिकालातीतवर्षेभ्यः पञ्चत्रिंशदधिकशते शोधिते शेषः शककालो भवति। स इष्टवार्षिकः कर्मभूमौ संस्थाप्यः ! अगवसुशरैरूनः कार्यः। अगाश्च वसवश्च शराश्च अगवसुशराः। अगादीनां संज्ञा लोकव्यवहारादेवावगन्तव्याः। अङ्कविन्यासश्च गणितग्रन्थेषु सर्वत्राप्रादक्षिण्येनैव योज्यः। तथा च सति पञ्चशतानि सप्ताशीत्यधिकानि ५८७ भवन्ति। तैरूनितशाकोऽर्कगुणो. द्वादशाहतः सन् चैत्रादेरिष्टमासावधिगतामावास्यावधिकचान्द्रमासैरधिकः कार्यः। एवं विधोराशिस्त्रिंशता हतः सन् इष्टदिनावधि शुक्लप्रतिपदादेर्गतवर्त्तमानमासतिथिभिर्युक्तः सन् पृथगधः स्थाप्यः। सोऽधःस्थराशिरिषुभिः पञ्चभिः सहितो द्विधा द्वितीयस्थाने स्थाप्यः। एवं सति यस्तृतीयस्थानस्थो राशिः स पञ्चोर्धिनवमनुभिः चतुर्दशभिः सहस्रैः पञ्चचत्वारिंशदधिकनवशत्या १४९४५ च भाजितः कार्यः। लब्धं दिनानि शेषं षष्ट्या सङ्गुण्य तेनैव भाजकेन लब्धं घटिका भवन्ति। शेषं षष्ट्या हत्वा तेनैव भाजकेन लब्धं विघटिकास्तेन च फलेन दिनादिकेन ऊर्ध्वस्थो राशिरूनः सन् षडगनन्दैः षट्सप्तत्यधिकनवशत्या ९७६ भाजितः कार्यः ततः फलमधिमासाः। शेषं सविकलमधिमासशेषमुच्यते। तदनष्टं कार्यम्। वक्ष्यमाणोत्तरोक्तचान्द्रार्कानयनोपयोगित्वात् ! ये चाधिमासका लब्धास्तान् त्रिंशता सङ्गुण्य दिनीकुर्यादागतैरधिमासदिनैः प्रथमराशिरधिकः सन् अधो द्वितीयस्थानस्थो रुद्रैरेकादशभिर्गुणितः सन् स्वरनववेदैः स्वरनपञ्चशतेन ४९७ युतः सन् पुनरप्यधस्तृतीयस्थानस्थः त्रगतिथिरुद्रैरेकादशभिरयुतैः सप्तत्यधिकपञ्चदशशतैश्च १११५७२ हृतो लब्धयोऽत्रापि दिनानि। तत्र त्रिष्ठं फलं ग्राह्यम्। तेन मध्यराशिविहीनः सन् त्रिखनगै स्त्र्यधिकसप्तशतै ७०३ हृतः कार्या यत्फलं तान्यवमानि। शेषं सविकलमनष्टं वक्ष्यमाणचन्द्रानयनोपयोगित्वात्

धार्य्यम् । लब्धैश्चावमरात्रैः प्रथमराशिरूनः सन् अहर्गणो भवति । अह्नां गणः अहर्गणः सौरसावनदिवससमूहः । करणादेरिष्टदिनार्द्ध-रात्रावधिगतो भवति । स चार्कादिः । तस्मिन् सप्तभक्तावशेषाङ्कसमो रव्यादिरर्द्धरात्रिको वर्त्तमानो वारो भवतीत्यर्थः । अर्कादयः प्रसिद्धा एवेति ।

अत्र वासना * । प्रसिद्धं कञ्चित्कालमधिकृत्य ग्रहगणितमारब्ध-व्यमिति विक्रमादित्यपरितोषितैस्तद्विद्भिः शककालादि ग्रहगणित-मुपनिबद्धमिति शाकोऽवगृहीतस्तस्मिंश्चागवसुशरसङ्ख्ये भिल्लमालका-चार्य्यब्रह्मगुप्तेनास्य विहितत्वाद्यदेष्टशाकोऽगवसुशरैरूनः क्रियते तदा करणादेर्गतानि सौराणि वर्षाणि भवन्ति । तानि च द्वादश-गुणितानि मासा भवन्ति । द्वादशभिर्हि मासैर्वर्षम् । ते सौर-मासाश्चैत्रादेरारभ्येष्टमासावधिगतचान्द्रमासैर्युताः सन्तः करणादेर्गताः सौरमासा भवन्ति । सौरचान्द्रमासानां च संक्रान्तिदर्शावधित्वेन भिन्नानामपि तेषां योगे सर्वेषामेव सौरत्वेन न विरुध्यते । अधिमास-शेषदिनाद्यवयवानामग्रहणात् । अन्यथाधिमासपाते दूरस्थेऽपि न मासैरन्तरं भवेत् निकटस्थे तु दर्शसन्निधावेव संक्रान्तेः सम्भवात् । ते च सौरमासास्त्रिंशद्गुणा दिनानि भवन्ति । तत्र वर्त्तमानमासस्य शुक्लप्रतिपदादेर्गततिथयो योज्यन्ते । एवं सर्वोऽपि दिनराशिः सौरो भवति स चाधिमासदिनैर्युक्तश्चान्द्रो भवत्यतोऽधिमासानयनं त्रैराशिकेन । तत्र चतुर्युगे सौरवर्षाणि दन्ताब्धयोऽयुतहतास्ते च

---

* अत्र ५८७ अयं ग्रन्थारम्भशाकः । इष्टशकादमुं विशोध्य ग्रन्थारम्भादहर्गण आनीतः । ततस्त्रिंदिनी कृत्यानुपातः यद्येकेन सौरदिनेन अत्र $\frac{१ - \frac{१}{१४९४५}}{९७६}$ मधिमासावयवो लभ्यते तदैष्टेन सौराहर्गणेन किमिति जाता अधिमासाः $= \frac{सौ - \frac{सौ}{१४९४५}}{९७६}$ अत उपपन्नमधिमासा-नयनम् ।

ततश्चान्द्राहर्गणसाधनं सुगममेव एवमेकस्मिन् चान्द्रदिनेऽवममानम् $\frac{११ - \frac{११}{१११५७३}}{७०३}$ ततोऽधि-मासावमशेषयोर्योजनेनाहर्गणानयनमुपपद्यते ।

द्वादशगुणिता मासा भवन्ति। मासाश्च त्रिंशद्गुणिता दिनानि भवन्तीति जाताश्चतुर्युगसौरदिवसाः खचतुष्टयनखशरेषुतिथयः। १५५५२००००० चतुर्युगेऽधिमासाः षट्गुणसुराङ्कतिथयः १५९३३३६ युगसौरदिनानां त्रिंशद्गुणितयुगाधिमासकानां च योगे युगचान्द्र-दिनानि भवन्ति १६०३०००० ८० युगावमानि युगचान्द्रदिनानां युगसावनदिनानां चान्तरम्। तथा च ब्रह्मसिद्धान्ते।

रविभगणा रव्यब्दा द्वादशगुणिता भवन्ति रविमासाः।
भगणान्तरं रवीन्द्वोः शशिमासाः सूर्यमासोनाः ॥१॥

अधिमासाः शशिमासास्त्रिंशद्गुणिता भवन्ति शशिदिवसाः
शशिसावनदिवसान्तरमवमानि तिथिः शशाङ्कदिनम् ॥२॥

तानि खवसुशरद्व्यष्टखशरकराः २५०८२५८० तथा च शिष्य-धीवृद्धिदतन्त्रे।

अङ्कामरानलनवेषुभुवोऽधिमासाः १५९३३३६
खाष्टेषुपक्षवसुखेषुयमाः क्षयाहाः २५०८२५८०।
व्योमाश्विपञ्चविषयेषुभुवोऽयुतघ्नाः १५५५२०००००
प्रोक्ता युगेऽर्कदिवसाः खगुणाहतास्ते ॥१॥
मासाः स्युरभ्रवसुखाम्बरखाभ्रवह्नि-
व्योमाङ्कशीतकरणा १६०३०००० ८० दिवसा हिमांशोरिति।

एवं स्थिते त्रैराशिकम्। यदि युगाधिमासैर्युगसौरदिवसा लभ्यन्ते तदैकस्याधिमासस्य कियन्तः सौरदिवसा भवेयुरिति लब्धाः षडगनन्दाः ९७६। शेषं कृतरसखवेददिशः। १०४०६४ आभिर्युगसौरदिनानां भागे हृते पञ्चोदधिनवमनवो १४९४५ लभ्यन्ते। तत एकाधि-मासकदिनैः षडगनन्दसङ्ख्यैस्त्रैराशिकम्। यदि षडगनन्दतुल्य-सौरैरेकोऽधिमासो भवति तदाऽमीभिः करणादेर्गतसौरैः कियन्त इति गतसौराणां पञ्चोदधिनवमनुभिर्भागमपास्य शेषस्य षडगनन्दै-

भागे हृते लब्धाःकरणादेर्गताधिमासाः । शेषमधिमासपातस्य गताः सौरदिवसा भवन्ति । तानेव षडगनन्देभ्यो विशोध्य येऽवशिष्यन्ते तेऽधिमासपातस्य गम्यदिवसा भवेयुः । दिवसानां त्रिंशता भागमपहृत्य मासादिकालः कार्यः । ऐष्यातीतकालयोरैक्ये भवेयुः षडगनन्दाः किञ्चिदधिकाः । एतैर्द्वात्रिंशन्मासाः षोडशदिनानि घटिकात्रयं पञ्चपञ्चाशद्विघटिकाः । एतावता कालेन मध्यममानेनाधिमासः पतति । स च चैत्रसितादिके यस्मिन् पतति तदात्मक एवासौ ज्ञेयः । स चासंक्रान्तिः । तथा च भास्करीये सिद्धान्तशिरोमणौ ।

असंक्रान्तिमासोऽधिमासः स्फुटः स्यात्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्यात्
तदा वर्षमध्येऽधिमासद्वयं च ॥
गतोऽब्ध्यद्रिनन्दैर्मिते ९७४ शाककाले
तिथीशै १११५ र्भविष्यत्ययाङ्गाक्षिसूर्यैः १२५६ ।
गजाद्र्यग्निभूभि १३७८ स्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः १४१ क्वचिद्गोकु १९ भिश्च ॥२॥
यस्मिन्नधिमासः पतितोऽप्यलब्धो
यदा यदा वाऽपतितोऽपि लब्धः ।
सैकैर्निरेकैः क्रमशोऽधिमासै-
स्तदा दिनौघः सुधिया प्रसाध्यः ॥३ इति ।

अथ तैरधिमासैर्दिनीकृतैः करणगतसौरदिनराशिः सहितश्चान्द्रो भवति । शेषमधिमासशेषाख्यं सविकलमनष्टं धार्यम् । चान्द्रश्चावमहीनः सावनो भवत्यतो गतावमानयनम् । तत्र त्रैराशिकम् । यदि युगावमैर्युगचान्द्राणि लभ्यन्ते तदैकादशभिरवमैः कियन्तीति लब्धा-

त्रिखमुनयश्चान्द्राः ७०३। शेषं खवेदखाष्टतिथयः १५८०४०
एभी रुद्राहतयुगचान्द्राणां भागे हृते लब्धास्त्र्यगतिथिरुद्राः १११५७३।
ततो गतावमानयनाय त्रैराशिकम्। यदि त्रिखनगचान्द्रैरेका-
दशावमानि लभ्यन्ते तदाकरणादेर्गतचान्द्रैः कियन्तीति। अत्रैका-
दशहतचान्द्राणां स्वकीयं त्र्यगतिथिरुद्रविभागं विशोध्य शेषस्य त्रिख-
नगैर्भागे हृते करणादेर्गता ऊनरात्रा लभ्यन्ते। शेषं चावमशेषाख्यं
दिनाद्यं सविकलं चन्द्रानयनोपयोगित्वादनष्टं धार्यम्। तैश्चाव-
मरात्रैरूनश्चान्द्रदिनराशिः सौरमावनोऽहर्गणात्रिको भवति। ऊन-
रात्रशेषस्यैकादशभिर्भागे हृते यल्लब्धं दिनादि सोऽवमस्य पतितस्य
गतकालः। तदवशेषं त्रिखनगेभ्यो विशोध्य यदवशिष्यते तस्यैका-
दशभिर्भागे हृते यल्लब्धं दिनादि तेन कालेनान्यस्यावमस्य पातो
भविष्यति। एष्यातीतकालयोरैक्ये एकादशभागोनाश्चतुःषष्टिर्दिवसा
भवन्ति। मध्यममानेन सोऽवमपातस्य कालः। त्रिखनगानयने
च युगावमानि त्रिशतीहीनानि शिष्यन्ते। यस्मात्पौलिशादि-
सिद्धान्तेष्वहर्रात्रिकरणे त्रिशती भूदिनेषु शेष इष्यते। चन्द्रभू-
दिनान्तरं त्रिशतीहीनमुत्पाद्यते। तदेवावमदिनानि स्युरिति॥
अथाधिमासावमयोरानयने क्षेपोत्पत्तये करणादौ कलियुगादे-
रनेनैव करणेनाहर्गण आनीयते। तद्यथा। शकादौ कलियुगादे-
र्गताः सौराब्दा गोऽगैकगुणाः ३१७९ करणादिशाकश्चागवसुशराः-
५८७। तेषां योगे करणादौ कलियुगगताब्दाः ३७६६ एते द्वादशा-
हतास्त्रिंशता हताश्च दिनानि भवन्ति। ते त्रिष्ठास्ततोऽधःस्थो राशिः
पञ्चोदधिनवमनुभिर्भक्तो लब्धं घटिकास्त्रिचत्वारिंशत् ४३। लब्धेन
मध्यमराशिरूनः षडगनन्दभक्तश्च लब्धमधिमासाः। १३८९
शेषमिषवः ५। सप्तदश घटिकाः। ५।१७ अयमधिमासानयनेक्षेपः।
आचार्येण तु पञ्चैवात्रोदाहृताः। शेषाः सप्तदशघटिका अवमानयने
क्षेपाय मनुसम्मिता घटिकाश्चोत्तराध्याये वक्ष्यमाणत्वादत्र नोक्ताः॥
तद्यथा।

अधिमासावमशेषे घटिकासप्तदशमनुभिरभ्यधिके ।
इन्दूच्चचन्द्रपातावूनौ शरदशविलिप्ताभिः ॥

इति । लब्धाधिमासकैश्च दिनीकृतैः ४१६७० प्रथमराशिरधिको जातः १३८७४३० अयं राशिः पृथग्भूतो भवेद्धत्वा त्र्ययतिथिरुद्रहृतः फलम् १३७ शेषं षष्टिहतं तेनैव च्छेदेन भक्तं लब्धं घटिकाः षट्चत्वारिंशत् ४६ अनेन मध्यमराशिरूनो गुणखमुनिभक्तः फलमवमद्दिनानि २१८६५ शेषं खरनववेदा मनुर्घटिकाश्च ४८७।१४ अयमवमशेषस्य क्षेपः । अवमदिनैरूनः प्रथमस्थानस्थराशिः करणादिकालीनः कलियुगादेर्गतसौरसावनाहर्गणो भवति । शररसशरेषु नगाग्निशशिनः १३७५५६५ । तस्मिंश्च सप्तहृतावशेषे द्विःशेषोऽतो भार्गवादेर्दिनवारो भोग्योऽर्कौ भवति । भार्गवादेर्हि कलियुग प्रवृत्तिः । अतः खण्डखाद्यकेऽर्कवारादिरहर्गण इति । सचार्द्धरात्रिककरणेन वर्त्तमानार्द्धरात्रिको भवतीत्युपपन्नम् ॥५॥

अथाहर्गणात् ग्रहानयनम् । तत्र ग्रहाणां चत्वारो भेदा भवन्ति । मध्यममन्दोच्चशीघ्रोच्चपाताख्यास्तत्रार्कचन्द्रयोः शीघ्रोच्चाभावो रवेश्च पाताभावोऽतो रवेर्भेदद्वयं मध्यममन्दोच्चाख्यम् । चन्द्रस्य भेदत्रयं मध्यममन्दोच्चपाताख्यम् । भौमादीनां पञ्चानां ग्रहाणां तु चत्वारो भेदा मध्यममन्दोच्चशीघ्रोच्चपाताख्याः । तत्र ग्रहाणां गतेः स्पष्टीकरणायोच्चं पूर्वाचार्यैः प्रकल्पितम् । याम्योदग्गतिसिद्ध्यर्थं च पात इति । तत्र तावद्य एव मध्यमो रविः स एव बुधः शुक्रश्च । स एव भौमजीवसौराणां शीघ्रोच्चम् । भगणानां समत्वात् । तत्र तावद्रवेर्मध्यमस्थानयनमार्ययाऽऽह ।

खखवसुगुणिताद्वसुगुणाकृताधिकान्मुनिनखद्विनन्दयमैः ।
भगणाद्यर्कबुधसिताः शीघ्रोच्चं कुजगुरुशनीनाम् ॥६॥

प्रागानीतसौरसावनाहर्गणात् खखवसुभिरष्टशतै ८०० र्गुणितात् वसुगुणकृतैरष्टत्रिंशदधिकचतुःशतै ४३८ रधिकात् मुनिनखद्विनन्दयमैरेकोनत्रिंशदयुतैर्द्वाविंशतिशतैः सप्तभिश्च २९२२०७ भक्ताद्यल्लब्धगणादि फलं तन्मध्यमा अर्कबुधसिताः कुजगुरुशनीनां च शीघ्रोच्चं भवति।

अयमर्थः। इहानीताहर्गणं कर्मभूमौ संस्थाप्याष्टभिः शतैराहत्य वसुगुणकृतैरधिकीकृत्य च मुनिनखद्विनन्दयमैर्भजेल्लब्धं भगणाः। तच्छेषं द्वादशभिर्हत्वा तेनैव च्छेदेन लब्धा अंशाः। तच्छेषं च षष्ट्या हत्वा तेनैव च्छेदेन लब्धा लिप्ताः। शेषं तथैव षष्ट्या हत्वा तेनैव च्छेदेन लब्धा विलिप्ताः। एवं यथाक्रमलब्धान्यधोऽधः स्थापयित्वा तेषां भगणान् निःप्रयोजनत्वात् परित्यज्य शेषं राश्याद्यं विलिप्तान्तं चतुःस्थानस्थं रव्यादिग्रहरूपं भवति॥

अत्र वासना। चतुर्युगे सूर्यादीनां भगणाः ४३२०००० तथा च शिष्यधीवृद्धिदतन्त्रे।

दन्ताब्धयोऽयुतहता ४३२०००० युगवत्सराः स्युः
सूर्यज्ञशुक्रभगणा अपि तत्समानाः।
तावन्त एव कुजजीवशनैश्चराणां
शीघ्राख्यतुङ्गभगणा गणकैर्निरुक्ताः।

चतुर्युगे सावनाः १५७७९१७५०० तथा च तत्रैव।

व्योमाभ्रबाणतुरगक्षितिनन्दशैल-
क्ष्माभृच्छिलीमुखभुवः क्षितिवासराः स्युः।

ते चार्द्धरात्रिककरणत्वात् त्रिशतीयुताः १५७७९१७८०० एतैस्त्रैराशिकम्। यद्येतावद्भिर्युगसावनै रव्यादीनां युगभगणा भवन्ति तदाऽहर्गणतुल्यसावनैः कियन्त इति। अत्र भाज्यभाजकराश्योर्युगभगणयुगसावनाख्ययोः परस्परं तावद्भजनं कार्यं यावदेको

राशिरवशिष्यते सोऽपवर्त्तकराशिस्तेनोभौ राशी अपवर्त्तितौ निरंशौ स्याताम् । तदपवर्त्तकः खखकृतशराः ५४०० अनेनापवर्त्तितयो राश्योर्भगणस्थाने जाताः खखवसवः ८०० त्रिशतीयुतभूदिनानां च स्थाने मुनिनखद्विनन्दयमाः २९२२०७ शेषं स्पष्टम् ।

अथ क्षेपोत्पत्तये करणादौ कलिगताहर्गणः १३७५५६५ अयं खखवसुहतो मुनिनखादिभक्तश्च जातं भगणशेषं वसुगुणकृताः ४३८ । भगणशेषे क्षेपोऽयमित्युपपन्नम् ॥

अथ यथाऽऽयातरवेरर्द्धरात्रादवमशेषाच्चार्द्धरात्रिक-मध्यमचन्द्रानयनमार्ययाऽऽह ।

**रविगुणतिथिभागयुतः पृथगर्कस्त्रिगुणितादवमशेषात् ।**
**त्र्यगशशिलब्धांशयुतोऽर्द्धरात्रिको मध्यमश्चन्द्रः ॥ ७ ॥**

रविभिर्गुणाश्च ते तिथयश्च त एव भागास्तैर्युतः । अयमर्थः । अर्को रविः पृथक् द्वितीयस्थानेऽहर्गणे आनीयमाने शुक्लप्रतिपदादेरारभ्य यावन्तस्तिथयः प्रवृत्ता आसन् तावन्तो द्वादशगुणा भागा भवन्ति । तैर्युतः कार्यः । तथाऽहर्गणानयने यत्स्पष्टमुत्तरसंस्कारसंस्कृतमवमशेषं सविकलं त्रिष्ठमनष्टं स्थापितमस्ति तस्मात् त्रिगुणितात् त्र्यगशशिभिः त्रिसप्तत्यधिकशतेन लब्धं यदंशादि फलं तेन युतो रविगुणतिथिभागयुतः पृथकस्थोऽर्कोऽर्द्धरात्रिको मध्यमश्चन्द्रो भवतीत्युपलक्षणम् । तेन सर्वेऽपि ग्रहा अस्मादहर्गणादर्द्धरात्रिका एव भवन्ति । अन्यच्च यथा रवेरवमशेषाच्च चन्द्रानयनमेवं वक्ष्यमाणविधिनाऽहर्गणाच्चन्द्रमानीय ततश्चन्द्रादवमशेषाच्च रवेरप्यानयनं वैपरीत्येन स्वधियैवोह्यम् । तथा च भट्टोत्पलः ।

रविगुणतिथिभागोनः पृथक् शशी त्रिगुणितादवमशेषात् ।
त्र्यगशशिलब्धांशोनोऽर्द्धरात्रिको मध्यमः सूर्यः ॥ इति

अत्र वासना। एकस्मिन् दिने राश्यादिको रविः ०।०।५९।८ एष रविगुणतिथिभागैर्द्वादशभिर्युतः ०।१२।५९।८ एकस्मिन्दिने चन्द्रः ०।१३।१०।३५ अनयोरन्तरलिप्ताः ११।२७। एकस्मिन्दिने खखण्ड-खाद्यकेऽवमशेषम् ११ एवं स्थिते त्रैराशिकम्। यद्येकादशकेनाव-मशेषेण एतावत्योऽन्तरलिप्तास्तदा द्विनवरससङ्ख्येन ६९२ कियत्य इति फलं खयमस्वरकलाः ७२० तास्व षष्ट्या हृता द्वादश भागा भवन्ति ते. पुनस्त्रैराशिकम्। यदि द्विनवरसैर्द्वादश भागा भवन्ति तदाऽनेनेष्टावमशेषेण किमिति। अत्र भाज्यभाजकयोश्चतुर्भिरप-वर्त्तने जातमवमशेषस्य त्रिगुणकस्त्रागशशिनश्च १७३ भाजकः। फलं चांशादि तेन युतो रविगुणतिथिभागयुतोऽर्कश्चन्द्रो भवतीत्युप-पन्नम्॥ *

अथावमाधिमासशेषाभ्यामर्द्धरात्रिकार्कचन्द्रयोरानयनमुक्तराध्यायो-क्तार्याद्वयेनाह।

द्विनवरसभक्तमवमावशेषमाप्तं दिनादि तत्सहितात्।
अधिमासशेषकाच्च त्रिंशद्गुणिताद्दतुखदिग्भिः॥८॥
मासदिनप्रथमैक्यं पृथक् त्रयोदशगुणं द्वितीयोनौ।
द्वावप्येवं मध्यौ राश्याद्यावर्कचन्द्रौ वा॥ ९॥

इष्टदिनावमशेषमुत्तरसंस्कृतं कर्मभूमौ संस्थाप्य द्विनवरसैः षड्भिः शतैर्द्विनवत्या ६९२ च भक्तं कार्यम्। तत आप्तं यत् दिनादि त्रिष्ठं फलं तस्य प्रथमफलमित्याख्या। तदनष्टं धार्यम्। ततस्तद्दैवसिकस्पष्टाधि-मासशेषं तेन दिनादिफलेन यथायोग्यं युक्तं विधाय सविकलमपि त्रिंशता ३० गुणनीयम्। ततोऽधस्तनाद्राशेः षष्ट्या विभज्य लब्धमुर्द्धस्थे योज्यम्। तत ऊर्द्धस्थराशे ऋतुखदिग्भिः षडधिकदशशते १००६

* भट्टोत्पलोक्तमत्रस्योपपत्तिरप्येतद्विलोमविधिना सुगमैव।

भोगे हृते यद्दिनादि लब्धं फलं तस्य द्वितीयफलमित्याख्या। ततो यावत्सङ्ख्यानां मासानां तिथीनां चाधिमासावमशेषौ गृहीतौ तत्संख्यासमा राशयः परिकल्प्यास्तिथयश्च भागास्ते च प्रथमफलाख्यराश्यावंशादिपरिकल्पिते यथायोगं क्षेप्यास्तस्य राशेर्मासदिनप्रथमैक्यमित्याख्या। तमेव राशिं पृथक् द्वितीयस्थाने कृत्वा त्रयोदशभिर्गुणयित्वा स्वच्छेदैर्विभज्य लब्धं च यथायोगमुपर्युपरि योजयेत्। एतौ द्वावपि राशी द्वितीयफलेन यथायोगं हीनौ कार्यौ। एवं वा राश्याद्यौ राशिभागलिप्ताविलिप्तारूपावर्कराशिकौ मध्यमावर्कचन्द्रौ भवेताम्।

अत्र वासना॥ प्रागपवर्त्तितचान्द्रदिना ७०३ वम ११ कुदिनानि ६९२ अत्रावमशेषात् दिनादि फलं त्रैराशिकेनोत्पाद्यते। यदि द्विनवरसैर्भूदिनैः त्रिखनगाश्चान्द्रदिनानि लभ्यन्ते तदाऽनेन भूदिनावयवेनावमशेषात्मकेन त्रिखनगच्छेदेन कियन्तीति। अत्रावमशेषस्य छेदगुणकयोस्तुल्यत्वान्नाशे द्विनवरसा भागहारः फलं दिनादि। तदवमशेषफलं प्रथमफलमुच्यते। तदेवाधिमासशेषे तद्दैवसिके दिनाद्यात्मकं यथायोगं योज्यते यथा तदधिमासशेषं तद्दिनतिथ्यन्तकालिकं सत् तद्दिनसूर्योदयावधिकं भवति। तिथ्यन्तार्कोदयान्तरं ह्यवमशेषम्। अथाधिमासकालादारभ्येष्टसावनदिनान्तावधित्वेन रविचन्द्रमासयोरन्तरसिद्ध्यर्थं त्रैराशिकम्। यदि ऋतुखदिक् १००६ सङ्क्यादिनैस्त्रिंशदधिमासदिनानि लभ्यन्ते तदाऽनेन तद्दिनरव्युदयावधिकालिकेनाधिमासशेषेण चन्द्रदिनात्मकेन किमिति। लब्धं दिनादि तत् द्वितीयफलमुच्यते। अधिमासशेषफलं तद्दिनावधि सौरचान्द्रमानयोरन्तरं भवति। तत्र प्रथमफले चैत्रादेरारभ्य तद्दिनार्कोदयावधिका गता मासास्तिथयश्च योज्यन्ते येऽहर्गणानयने दत्ता आसन्। यावदेव चैत्रादेरारभ्य तद्दिनार्कोदयावधिकं चान्द्रभुक्तं सिद्ध्यति तावदेव रविभुक्तमपि स्याद्यदि मासादावधिमासपातकालो न भवेत्। तदा रविचन्द्रमानयोरन्तराभावादिदमेव रविभुक्तं

स्यादन्यथा चान्द्रमासतुल्यमन्तरमुत्पद्यते। तस्मादधिमासफलं विशोध्य मध्यमोऽर्हराशिककरणत्वादर्हराशिको रविर्भवति। तदेव त्रयोदशगुणमधिमासफलोनं चन्द्रः स्यात्। यत एकगुणमधिमास-फलविहीनं रविर्भवति। तत्र च द्वादशगुणास्तिथयः प्रक्षिप्यन्ते तस्मादुपपन्नस्त्रयोदशसङ्ख्यको गुणक इत्युपपन्नमिति ॥

अथाहर्गणाच्चन्द्रानयनमुत्तराभ्यामार्यायाऽऽह ॥

खखरसगुणितात्मशरां-
शमुनीन्दुकृताधिकात् त्रिनवगुणाष्टिहृतात्।
भगणादि वा हिमांशु-
र्नवयमतानैः कलारहितः ॥१०॥

अहर्गणात् खखरसैः षड्भिःशतैः ६०० गुणितात् ततः सशरांश-मुनीन्दुकृताधिकात् शरसङ्ख्योंऽशः शरांशः तेनाधिकाश्चते मुनीन्दुकृताश्च सशरांशमुनीन्दुकृताः ४१७। मध्यमपदलोपी समासः। ततः सह-शब्देन समास्तथाविधादहर्गणात् त्रिनवगुणाष्टिभि १६३९३ र्हृतात् यत् भगणादि फलं तद्वा हिमांशुश्चन्द्रो भवेत्। स चाहर्गणात् नवयमतानैर्भक्तात् यत्कलादि फलं तेन रहितः कार्य इति। अयमर्थः। इष्टदिनाहर्गणं षड्भिः शतैर्हत्वा द्वादशघटिकाधिकसप्तदशोपेतचतुः-शतैः सहितं विधाय षोडशभिः सहस्रैः शतत्रयेण त्रिनवत्या १६३९३ च भजेत्। यत् भगणादिकं फलं तदहर्गणान्नवयमतानै ४९२९ लब्धकलादिफलेन हीनं हिमांशुश्चन्द्रो भवति।

अत्र वासना॥ चन्द्रस्य युगभगणाः ५७७५३३३६ तथा च शिष्य-धीवृद्धिदतन्त्रे। चन्द्रस्य षड्गुणसुरेषुनगाद्रिबाणा इति। तद्दिनानि च त्रिशतीयुतानि प्रागुक्तान्येव। ततस्त्रैराशिकम्। यद्येतावद्भि-'र्युगभूदिनैर्युगभगणा लभ्यन्ते तदाऽहर्गणेन' * कियन्त इति। अत्र

* लिखितपुस्तके नास्तीयं पंक्तिः।

त्रिशतीयुतभूदिनानां युगभगणानां चासन्नापवर्त्तकेन शरतत्त्वरसनन्द-सङ्ख्ये ९६२५५ नापवर्त्तने भूदिनस्थाने त्रिनवगुणाष्टयो भगणस्थाने षट्शतानि जातानि । यदा वाऽऽसन्नापवर्त्तकान्तरपरिज्ञानाय कुदिनराशिं १५७७९१७८०० षट्शत्या सङ्गुण्य त्रिनवगुणाष्टिभिर्विभज्य भगणादि फलमानीयते तदा भगणाः खेषुसुरशरनगागेषवः ५७७५३३५० राशयोनव ९ पञ्चविंशतिरंशाः २५ द्वाविंशतिर्लिप्ताः २२ द्वादशविलिप्ताः १२ अस्माद्भगणादिफलात् यदि पठितचन्द्रभगणा विशोध्यन्ते तदा जातं शेष भगणा मनवः १४ राश्यादि च तथैव । भगणा द्वादशहताः १६८ नवराशियुताः १७७ त्रिंशता हता अंशयुताश्च ५३३५ एते षष्ट्या हताः शेषसहितद्वाविंशतियुताः ३२०१२२।१२ ततस्त्रैराशिकम् । यद्येतावतोभिर्लिप्ताभिश्चन्द्रभगणेभ्योऽधिकत्वात् षयात्मिकाभिस्त्रिशतीयुतभूदिनानि लभ्यन्ते तदैकया लिप्तया कियन्तीति । अधिकलिप्ताभिस्त्रिशतीयुतभूदिनानां भागे हृते लब्धं नवयमताना: प्रतिभाजकः ॥ अथ शोधकोत्पत्तिः ॥ तत्र करणादौ कलिगताहर्गणे षट्शताहते त्रिनवगुणाष्टिहृते च भगणशेषमिदम् ६२८ क्षेपात्मकम् । अस्माच्चापचयः कार्य इति अहर्गणात् नवयमतानैर्लब्धा लिप्ता ऋणात्मिका २७९ विलिप्ताः ४ तत्पराः ३३ अतितत्पराः ९ परतत्पराः ३३ । एता विपरीतकर्मणा शेषपरिणताः क्रियन्त इति त्रिनवगुणाष्टिभिर्भागे हृते एता लब्धाः । अत एताभिरेव त्रिनवगुणाष्टयो गुणिताः ४५७४४८९०।५१ लिप्तानां षष्टिर्गुणोऽतः षष्ट्या भक्तोऽयं राशिर्जाता अंशा ७६२४८ एभ्यस्त्रिंशता भाजिता राशयः २५४१ एभ्यो द्वादशभिर्भगणात्मकम् २११।४६।३० एतत् पूर्वस्मात् भगणशेषात् धनरूपात् ६२८ विशोध्य शेषं मुनीन्दुकृता ४१७।१३।३० एष क्षेपः । अत्राचार्येण किञ्चित् शेषमुपेक्ष्य द्वादशैव शरांश उपनिबद्ध इत्युपपन्नं सर्वम् ।

अथार्कचन्द्रयोरुच्चप्रतिपादनमार्ययाऽऽह ॥

**भागाशीतिरिनोच्चं शशिनः पादोनकृतशरकृतोनात् ।**
**भगणादिर्द्विविरदैर्वसुनवयमनवगुणैः सकलम् ॥११॥**

भागानामशीतिर्भागाशीतिरिनस्य रवेरुच्चं भवति। अशीतिस्त्रिंशता भागे हृते राशिद्वयं विंशतिरंशाश्च भवन्ति। शशिनश्चन्द्रस्य पुनरहर्गणात् पादोनकृतशरकृतैरूनात् द्विविरदैर्यद्भगणादि फलं तदहर्गणात् वसुनवयमनवगुणैर्भागे हृते यत्कलादि फलं तेन सहितं सदुच्चं भवति। अयमर्थः। अहर्गणं त्रिपञ्चाशदधिकचतुःशतसङ्ख्यदिनैः पञ्चचत्वारिंशद्घटिकाभिश्च ४५३।४५ हीनं विधाय द्विविरदै ३२३२ भजेत् लब्धं भगणान् निःप्रयोजनत्वात् त्यक्त्वा शेषं द्वादशभिर्गुणयेत् तदधःस्था याः पञ्चदश घटिकास्ता अपि द्वादशभिराहत्य षष्ट्या भजेत्। ततो लब्धा ये त्रयस्तान् द्वादशाहतभगणशेषे संयोज्य द्विविरदै ३२३२ भजेद्राश्यादि फलं भवति। पुनरहर्गणादेकोनचत्वारिंशत्सहस्रैर्द्व्यूनशतत्रयेण ३८२९८ च यल्लब्धं कलादि फलं तेन सहितं कार्यम्। तस्मात् पञ्च विलिप्ताः शोध्या इत्युत्तराध्याये वक्ष्यति। इन्दूच्चचन्द्रपातावूनौ शरदिग्विलिप्ताभिः। इत्येवमर्द्धरात्रिकं चन्द्रोच्चं भवत्येव।

अत्र वासना॥ ग्रहाणां स्पष्टगतिसिद्ध्यर्थं पूर्वाचार्यैरुच्चानि प्रकल्पितानि। याम्योदग्गतिसिद्ध्यर्थं च पातास्तथा च ब्रह्मसिद्धान्ते।

संसाधनार्थमुच्चं प्रकल्पितं ग्रहगतेस्तथा पातः।
भुक्तेरूनाधिकते मानस्य च भवति कर्णवशात्॥

इति। तत्र रव्युच्चमतिमन्दगतित्वादार्यभटतन्त्रे करणादिकालीनं स्थिरमेव निबद्धम्। तच्च स्थूलम्। सूक्ष्मं चोत्तराध्याये वक्ष्यति।

भानुमतो मन्दोच्चं राशिद्वयमंशकाश्च वसुचन्द्राः।

इति। तत्र रविमन्दोच्चस्य कल्पे भगणाः खाष्टोदधयः ४८० करणादौ च कल्पगताब्दाः १९७२९४७७६६ कल्पे सौराब्दाः ४३२०००००००० ततस्त्रैराशिकम्। यदि कल्पसौरैः कल्पभगणा लभ्यन्ते तदा करणादौ कल्पगतसौरैः किमिति लब्धं करणादौ रविमन्दोच्चभगणाः २१९ राशिः २ अंशाः १७ कलाः ५४ विकलाः ३६ अत्र लघ्वाधिकतयाऽष्टादशैवांशा निबद्धा इति। अथ चन्द्रोच्चस्य तु चतुर्युगभगणाः ४८८२१९। तथा च शिष्यधीवृद्धिदतन्त्रे। गोकुद्विवस्वद्वियुगानि मृदूच्चमिन्दोरित्यतोऽभिस्त्रैराशिकम्। यदि युगभगणैस्त्रिशतीयुतभूदिनानि लभ्यन्ते तदैकेन किमिति फलं किञ्चिदूना द्विविरदा एकभगणदिनानि। द्विविरदैस्त्रिशतीयुत भूदिनानां भागे हृते लब्धं भगणादिफलम् ४८८२१७।१।२०।४७ एतदुक्तोच्चभगणेभ्यो विशोध्य शेषं भगणादि १।१०।८।१३ एतत् कलीकृतम् ४०१५३ एताभिरूनकलाभिर्भूदिनेभ्यो भागे हृते लब्धं प्रतिच्छेदो वसुनवयमनवगुणाः ३९२९८। अनेन भूदिनेभ्यः फलं ता एव कलाः ४०१५३ एताभिर्लिप्ताभिरूना भगणा द्विविरदैरुत्पद्यन्ते। अतः कलादिफलसहितो राशिः पूर्णो जायतेऽतोऽनुपातः। यदि प्रतिभाजकतुल्यसावनैरेका कला तदाऽहर्गणतुल्यसावनैः किमिति लब्धं कलादि शश्युच्चे क्षेप्यम्।

अथ शोधकोत्पत्तिः। तत्र करणादावहर्गणः १३७५५६५ अयं भाजकेन द्विविरदैर्भक्तः शेषम् १९६५ कलियुगादिद्युगणोत्पादिते च शश्युच्चे राशित्रयं देयम्। तथा च शिष्यधीवृद्धिदतन्त्रे। शशाङ्कतुङ्गे भवनत्रयं क्षिपेदिति। राशित्रयं च भगणस्य तुर्यो भागः। तदत्रानुपातः! यदि द्वादशभिर्भवनैर्भाजकतुल्यं भगणशेषं तद्राशित्रये किमिति। लब्धं त्रिभस्य भगणशेषम् ८०८ एतत् प्राक्शेषराशौ १९६५ प्रक्षिप्तम् २७७३ पुनः करणाद्यहर्गणात् प्रतिभाजकेन वसुनवयमनवगुणैर्लब्धा लिप्ताः ३५ एताभिर्विपरीतकर्मणा

भगणशेषं कार्यम् । अधोभाजकेन द्वित्रिरदैर्लिप्ता गुणिताः ११३११२० अतः षष्ट्या लब्धोंऽशशेषराशिः १८८५ अस्मात् त्रिंशता राशिशेषम् ६३ अस्मात् द्वादशभिर्भगणशेषं पञ्च सपादाः ५।१५ पूर्वपिण्डितराशौ २७७३ क्षिप्ताः २७७८।१५ अयं प्रक्षेपो भाजकराशेः ३२३२ शुद्धः शोधनको जातः पादोनशतशरशताः ४५३।४५ अनेन शोधनकेनाहर्गणस्य प्रक्षेपसमता जायत इत्युपपन्नम् ॥

अथोत्तराध्यायोक्तचन्द्रोच्चानयनमार्ययाऽऽह ॥

द्युगणात् खरुद्रगुणितात्
भवशरयुक्ताच्छशित्रिखाग्निहृतात् ।
भगणादि फलं शोध्यं
मध्यमचन्द्राच्छशाङ्कोच्चम् ॥१२

अहर्गणात् खरुद्रैर्दशाधिकशतेन ११० हतात् भवशरैरेकादशाधिकपञ्चशत्यो ५११ पेतात् शशित्रिखाग्निभिरेकत्रिंशदधिकसहस्रत्रयेण ३०३१ हृतात् यत् भगणादिफलं तन्मध्यमचन्द्रात् प्रागानीतात् शोध्यं शेषं चन्द्रोच्चं भवति ।

अत्र वासना ॥ चन्द्रभगणानां चन्द्रोच्चभगणानां च यदन्तरं ते चन्द्रकेन्द्रभगणास्ते च नगरुद्रशररसाश्विनगेषवः ५७२६५११७ एभिस्त्रैराशिकम् ॥ यदि चिशतीयुतभूदिनैश्चन्द्रकेन्द्रभगणा लभ्यन्ते तदेष्टाहर्गणेन कियन्त इति । अत्र केन्द्रभगणानां भूदिनानां चासन्नापवर्त्तकेन त्रिनवशरनखेषुभिः ५२०५९३ अपवर्त्तने भूदिनस्थाने शशित्रिखाग्नयः ३०३१ केन्द्रभगणस्थाने च खरुद्राः ११० ॥

अथ क्षेपोत्पत्तिः । तत्र करणादौ कलिगताहर्गणात् चन्द्रः ०।९।९।४३ चन्द्रोच्चं ७।९।२७।२५ चन्द्रोच्चे भवनत्रयं क्षिप्त्वा तच्चन्द्राद्विशोध्य जातं करणादौ केन्द्रम् १।२९।४२।१८ ततः ।

शशिनः पातेऽर्द्धकलां रव्यंशयुतां विनिक्षिपेत् केन्द्रे ।
प्रत्यर्द्धमिषुनगार्णवशककालात् खण्डखाद्यके बीजम् ॥

इति पूर्वाचार्यप्रवादः। तत्र करणादिशाकान्तरम् ११२ सार्द्धद्वात्रिंशद्विकलागुणितं षष्ट्याप्तं जाताः कलाः ६०।४० एतत् केन्द्रे प्रक्षिप्य जातं २।०।४२।५८ एतत् त्र्यस्तविधिना शशिशिखाग्निहतं यथायोग्यं षष्ट्या त्रिंशता च विभज्य लब्धं चोपर्य्युपरि संयोज्य जातम् ६१३४ अस्मात् द्वादशभक्तात् लब्धं भवशराः ५११ क्षेपः। यच्चात्र षष्ट्याद्याप्तशेषं तदुपेक्षितम्। एवमर्द्धरात्रिकं चन्द्रकेन्द्रं भवति। तस्मिंश्चार्द्धरात्रिकात् मध्यमाच्छोधिते सति चन्द्रोच्चमेवावशिष्यते। उपेक्षितद्वयस्य च यदन्तरमासन्नापवर्त्तके जातं तद्बीजफलसंस्कारेण भण्यत इति॥

एवं च रविचन्द्रचन्द्रोच्चान्यर्द्धरात्रिकानि जातानि तान्यन्यत्र काले तात्कालिकीकरणेन तात्कालिकानि भवन्ति। तच्च तात्कालिकीकरणं दिनभुक्तिं विना कर्त्तुं न शक्यत इति। अतो ग्रहाणां दिनभुक्त्यानयनमुच्यते। तच्चात्राचार्येण नोक्तम्। यतो य एवैकदैवसिको ग्रहः सैव तस्य दिनभुक्तिरुच्यते। अतो रूपमेवाहर्गणं परिकल्प्य ये ग्रहानयने गुणका उक्तास्तैस्तं हत्वा ये च भाजका उक्तास्तैर्भक्त्वा भगणादिफलं ग्राह्यम्। सा ग्रहस्य मध्यमा दिनभुक्तिर्भवति। तथा च भट्टोत्पलः।

रूपं द्युगणं कृत्वा गुणकारैर्भागहारकैः कथितैः।
शोध्यक्षेपविवर्ज्यं ग्रहस्य कुर्याद्दिवसभोगम्॥

तद्यथा॥ रवेः खखवसवो गुणका मुनिनखद्विनन्दयमाश्च भाजकाः। भगणादि फलम् ०।०।०।५९।८ इयं रविभुक्तिः! अत्र वसुगुणाक्षता न क्षेप्याः। करणादिगतस्याभावात्।

एवमन्येषामपि ग्रहाणां स्वस्वभगणैर्भुक्तिः साध्या। अत्र त्रैराशिकम् ! यदि ग्रहभाजकतुल्यसावनैर्ग्रहगुणकारतुल्या भगणा भवन्ति तदैकेन सावनेन किमिति। लब्धं भगणादि फलं ग्रहस्य दिनभुक्तिर्भवति। अथ चन्द्रस्य॥ रविभुक्तिः पृथक्स्था इयमेव गततिथेर्द्वादशगुणायास्तुल्यभागैर्युक्ता १२।५९।८ एकतिथ्यवमशेषम् ११ अस्य त्रिगुणस्य त्र्यगशशिभागैरेतैः ०।११।२७ अंशादिभी रविगुणतिथिभागयुतार्कभुक्तिः संयुता जाताऽशाद्या चन्द्रभुक्तिः १३।१०।३५ अथास्या वैपरीत्याद्रविभुक्तिर्यथा! अस्या रविगुणतिथिभागानपास्य जातम् १।१०।३५ एतत् त्रिगुणावमशेषफलेन ०।११।२७ हीनं जाता रविभुक्तिः ५९।८ अथ द्विनवरसभक्तमित्यादिना रविचन्द्रभुक्ती यथा। एक दिनस्यावमशेषम् ११ अस्मात् द्विनवरसभागो दिनादिः ०।०।५७ एतदेकदिनाधिमासशेषके एकके संयोज्य जातम् १।०।५७ एतत् त्रिंशता हतम् ३०।२८।३० अस्य ऋतुखदिग्भिर्भागे द्वितीयदिनादिः ०।१।४९ प्रथमदिनादिफले दिनमेकं संयोज्य जातम् १।०।५७ एतत् पृथक्स्थं त्रयोदशगुणम् १३।१२।२१ एते द्वे अपि फले द्वितीयफलेन हीने जाते रविचन्द्रभुक्ती ते एव। एवं सर्वेषामपि ग्रहाणां स्वस्वकरणेन स्वस्वभुक्तिरानेया। सा च प्राची। षट्प्रकारा हि ग्रहाणां गतिरस्माभिरुपलस्यते। तद्यथा। स्वव्यापारात्तावत्प्राची। भपञ्जरभ्रमणवशात् प्रतीची। अयनवशाद्‌वाच्युदीच्यौ। प्रतिमण्डलवशादुपर्यधश्चेति। अत्र च प्राच्येव। यतः पञ्चस्वपि प्रकारेषु गच्छन् ग्रहः प्राग्गतित्वं न त्यजति। तथा चोक्तमादित्यप्रतापसिद्धान्ते।

तस्मात् प्राची गतिर्नित्या स्वव्यापारान्नभःसदाम्।
ऊर्ध्वाधोऽपरयाम्योदग्गतयश्चान्यहेतुभिः॥ इति

तास्व यथा

एकोनषष्टिर्वसवः ५९।८ प्रभाकरे
खमन्दशैलाः शरवह्नयो ७९०।३५ विधोः।

धरासुते भूदहना रसाश्विनो ३१।२६
बुधे शराब्धीधियमा यमाग्नयः २४५।३२ ॥१॥
गुरौ समुद्रा नवसायकाः ४।५९ सिते
रसग्रहा अष्ट ८६।८ चले गतिर्दिने।
शनौ द्वयं २ षट् कुक्षता ६।४१ विधूच्चगाः
पाते हुताशाः सभवाः ३।११ कलादिकाः ॥२॥

| र | चं | मं | बुशी | बृ | शुशी | श | चंड | पा |
|---|---|---|---|---|---|---|---|---|
| ५९ | ७९० | ३१ | २४५ | ४ | ८६ | २ | ६ | ३ |
| ८ | ३५ | २६ | ३२ | ५९ | ८ | ० | ४१ | ११ |

एताभिर्भुक्तिभिर्ग्रहान् तात्कालिकीकुर्यात्। अहर्गणास्ताव-दर्द्धरात्रिका आगच्छन्ति। ते च भुक्तिपादयुक्ता भुक्तौ धनगतायामागामिसूर्योदयिका भवन्ति। अर्द्धभुक्तियुक्ता माध्याह्निकाः पादोनभुक्तियुक्ता अस्तकालिकाः सकलभुक्तियुक्तास्वागामिदिनार्द्ध-रात्रिकाः। एवमृणात्मिकायां भुक्तावतीतदिनास्तकालिकादयो यथा-सम्भवं स्वधिया ज्ञेया इति। स्वल्पकालान्तरे च त्रैराशिकेन फल-मुत्पाद्यम्। यदि घटिकाषष्ट्या स्वस्वभुक्तितुल्या लिप्ता ग्रहः प्राक् याति तदेष्टघटिकाभिः किमिति। लब्धं चागामिनि काले धन-मतीते तु ऋणं कुर्यादेवं तात्कालिका भवन्ति। स्पष्टभुक्त्या स्पष्टा मध्यमभुक्त्या च मध्यमास्तात्कालिकाः कार्या इति। ये च करणा-हर्गणायाता अर्द्धरात्रिका ग्रहास्त आर्यभटतन्त्रतुल्याः। तेषु च दृग्गणितविसंवादोऽतो वीजफलसंस्कृतास्ते ब्रह्मसिद्धान्ततुल्या भवन्ति। गणितागतग्रहस्य यन्त्रोपलब्धप्रत्यक्षग्रहस्य च यदन्तरं तद्बीज-मित्युक्तमत्र पुनर्ब्रह्मसिद्धान्तानीतग्रहस्य करणागतस्य चान्तरं तद्बीज-मतो वीजफलानयनमस्मदुपाध्यायत्रिविक्रमकृतं श्लोकाष्टकेन यथा।

द्विखेशो ११०२ नाक्षकाश्विघ्नाब्धरै ५ रुद्रै ११ र्नृपै १६ र्ग्रहैः ८।
ग्रहै ८ र्भूम्या १ शरै ५ र्बाणै ५ र्विश्वैः १३ पृथ्व्या १ भुवा १ क्रमात् ॥१॥

जिनैः २४ कक्षि २१ भिरश्वाङ्गै ६५ र्दिग्भिः १० सप्तेन्दुभि १७ र्युगैः ४।
द्वियमै २२ र्भास्करै १२ र्बाणाङ्गै ६५ र्बाणवेदैः ४५ र्नगेन्दुभिः १७१ ॥२॥
लब्धैर्योज्या गताब्दघ्नाः खं ० द्वौ २ द्वौ २ ग्रहभूमयः १८।
खं ० यमौ २ द्वौ २ चतुस्त्रिंशत् ३४ षट्कराः २६ सागरा ४ यमौ २॥३॥
सूर्याद्युत्तरपातान्तचलबीजविलिप्तिकाः।
स्थिरबीजकलाः शून्यमधोऽगाः ०।७ खमधो जिनाः ०।२४॥४॥
सपादरसनन्दाश्च ८६।१५ द्विखार्कास्त्रिशरा अधः १२०२।५३।
षड्ंशेन युता वेदाः ४।१० सत्र्यंशद्व्यङ्गबाहवः २६२।२० ॥५॥
शरेभा द्विविलिप्तोना ८४।५८ भाग्नयोऽधः शरानलाः ३२७।३५।
सार्द्धत्रिरसनासत्याः २।६३।१० कङ्गा वसुगुणा अधः ६१।३८॥६॥
पञ्चाग्नयोऽधस्तिथयः ३५।१५ चलाचलयुतिस्ततः।
खण्डखाद्यकजाताद्यपातोच्चसितशोध्रतः ॥७॥
शोध्याः शेषेषु लिप्ताः स्वं भूयोऽष्टोर्व्यो १८ विधावृणम्।
एतैस्त्रिविक्रमैर्बीजैर्ब्रह्मतुल्याद्धरात्रिकाः ॥८॥

अयमर्थः। शकादिष्टशककालात् द्विखेशैर्द्व्यधिकैकादशशतै-११०२ रूनादेकादशस्थानस्थाद्यथासङ्ख्यं शरेत्यादिभिर्निघ्नात् क्रमेण च जिनैरित्यादिभिर्भक्ताद्यानि लब्धानि विकलारूपाणि फलानि तैर्यथाक्रमं खमित्यादयो गताब्दैर्द्विखेशोनशकवर्षैर्गुणिताः संयोज्याः। एवं कृते सूर्यादिग्रहाणां चन्द्रोच्चचन्द्रपातोत्तरोक्तोच्चपातानामेकादशानां चला बीजफलविकला भवन्ति। तथा शून्यमित्यादयो यथासङ्ख्यमेतेषामेव ग्रहाणां स्थिरा बीजकला भवन्ति। तानि चाद्यपातचन्द्रोच्चशुक्रशीघ्रेभ्यो विशोध्यानि। शेषग्रहेषु स्वं योज्यानि। भूयः पुनरपि विधौ चन्द्रे अष्टोर्व्योऽष्टादश लिप्ताः कला ऋणं कार्याः। एभिस्त्रिविक्रमकृतैर्बीजैः संस्कृता आर्द्धरात्रिका ग्रहा ब्रह्मसिद्धान्ततुल्या भवन्ति।

अत्र वासना। द्विखेश ११०२ तुल्यशाके खण्डखाद्यकरणेनार्द्धरात्रिकान् ग्रहानानीय ततो ब्रह्मसिद्धान्तेनापि तात्कालिकानेव

ग्रहानानीय तद्बीजफलेन संस्कृत्य च तेषामुभयेषामपि अन्तरे कृते यस्य ग्रहस्य यदन्तरं धनर्णात्मकमुपलब्धं तस्य ग्रहस्य तत् स्थिरं बीजं प्रकल्पितम्। यच्च प्रतिवर्षमन्तरमुत्पद्यते स चलबीजेषु क्षेपः कृतो यच्च त्रैराशिकेन जिनादिवर्षैः फलमुत्पादितं। तच्चलबीजम् तच्च क्षेपयुतं स्फुटं चलबीजं भवति। तयोश्चलाचलबीजयोर्युतितुल्य-मन्तरं बीजमित्युक्तम्। तेन धनर्णात्मकेन यथाऽऽयातेन संस्कृता ग्रहा ब्रह्मसिद्धान्ततुल्या भवन्त्येव। यद्वा एतेऽहर्रात्रिका दुर्गोक्तबीजैः संस्कृता ब्रह्मसिद्धान्ततुल्या भवन्ति। तानि यथा।

श्रीखण्डखाद्ये करणे ग्रहाणां
बीजानि दुर्गः कुरुते यथा च।
ज्ञात्वाऽन्तरं क्षेपभवं तथाऽन्य-
द्विश्लेषजातं ग्रहयोर्विदित्वा ॥१॥
रवौ गजाक्षाङ्कयुगाभ्ररात्रिपे १०४९५८-
र्हनं त्यजेत् त्र्यग्रशमृते कलाद्वयम् ११४०।
शिलीमुखाष्टाङ्गगजै ८६८५ र्हनं विधो-
स्त्यजेत् सपादा नववह्नयः ३९।१५ कलाः ॥२॥
ऋणं ततोऽगाग्निरसै ६३७ स्तदुच्चतः
सदन्तलिप्ता विकलाः षडिन्दवः ३२।१६।
ऋणं तु पाते रसवह्निवसुगै ८३६-
र्नगाग्नियुक्ताष्टि ३७।१६ विलिप्तिकान्वितम् ॥३॥
कुजे तु समाक्षगिरिग्रहै ९७५७ र्हनं
नगागलिप्ता ७७ सहितं विधीयते।
धराभ्ररुद्रै ११०१ रदखेन्दु १०३२ युक् बुधे
धनं त्यजेत् खाश्वि २० विलिप्तिकास्ततः ॥४॥
गुरोरथाक्षाग्निकुसागरै ४१३५ र्हनं
ततश्च नन्देन्दु १९ विलिप्तिकास्त्यजेत्।

ऋणं तु शुक्रे खयुगाचलग्रहै ९७४०
युतं कलाभिस्त्रियुगाश्वि २४३ सङ्ख्यया ॥५॥
शनेर्धनं रूपकृताष्टखेचरै ९८४१
रसाङ्ग ६६ युक् खेन्दु १० विलिप्तिकास्ततः।
अहर्गणादाप्तफलेन संस्कृता
भवन्ति सिद्धान्तसमास्तु खेचराः ॥६॥
यावच्छकः कृत्तिवसुद्विसङ्ख्य- २८२१
स्तावच्च बीजानि परिस्फुटानि।
तस्मात्परं ज्यौतिषिकैर्ग्रहाणां
बीजानि कार्याणि यथोचितानि ॥७॥

इति दुर्गबीजानि।

वस्वब्धिसागरशरै ५४४८ र्धनमुत्तरोच्चे
युक्तं भसंख्य २७ कलिकाऽग ७ विलिप्तिकाभिः।
षट्पक्षनन्ददशभि १०९२६ र्विहृतात् द्युवृन्दात्
पाते धनं धृति १८ कलान्वितमुत्तरोक्तिः ॥ इति
रोल्लीयकृता * एते श्लोकाः स्पष्टार्थाः।

अत्र वासना॥ करणादावार्धरात्रिकान् ग्रहान् कलिगताहर्गणादनेनैव करणेनानीय ब्रह्मसिद्धान्तेनापि तात्कालिकानानयेत्। तेषामुभयेषामप्यन्तरं विधाय यस्य ग्रहस्य यावदन्तरं धनर्णरूपमुपलब्धं तस्य तावानेव क्षेपः प्रकल्पितः। यावद्भिश्च दिनैरेका कला अन्तरमुपलब्धा सोऽहर्गणस्य भाजकः कृतः। एवं च बीजं कलिगतषट्सहस्रसौरवर्षाणि यावत् स्फुटमिति। ते चार्धरात्रिका ग्रहा उदयान्तरकर्मसंस्कृता निरक्षदेशीया भवन्ति। तच्च कर्म पूर्वसूरिभिर्यातमिति संज्ञितं यदुक्तं तदत्राचार्येणोपेक्षितम्। तदस्मदुपाध्यायोक्तं खण्डखाद्यकोत्तरादत्रोच्यते। यथा

---

* अत्रादर्शपुस्तके यथालिखितमुपलब्धं तथैव लिखितमिदमिति।

मध्यार्कपदभुक्ता या लिप्ता लङ्कोदयासवः ।
यातासवोऽन्तरं तेषां निघ्नास्तैर्ग्रहभुक्तयः ॥
चक्रलिप्तोद्धृता लब्धं पृथक् लिप्तादिकं ग्रहे ।
धनं समपदस्थेऽर्के हानिः स्याद्विषमे पदे ॥२॥

अयमर्थः । मध्यश्चासावर्कश्च तस्य पदं तस्य भुक्ता या लिप्ता ये च मध्यार्कपदभुक्ता लङ्कोदयप्रमाणास्तेषामुभयेषामपि यदन्तरं ते यातप्राणा भवन्ति। एतदुक्तं भवति। अहर्गणायातबीजफलसंस्कृतार्कं कर्मभूमौ संस्थाप्य तत्र वक्ष्यमाणविधिना यथागताऽयनांशान् दत्वा पदकल्पना कार्या। तत्र द्वादशभी राशिभिर्भगणो भवति। तत्र चत्वारि पदानि भवन्ति। पदे पदे च राशित्रयम्। ततः सायनार्कात् भुक्तपदानि भवन्त्येवं वर्त्तमानस्य राशिस्थानं त्रिंशता सङ्गुण्याधः स्थाँशाँस्तत्र संयोज्य तमपि राशिं षष्ट्या निहत्याधःस्थाः कलास्तत्र योजयेदेवं पदभुक्तलिप्ता भवन्ति। तथा वर्त्तमानपदस्य भुक्तराशिसम्बन्धिनस्त्रिप्रश्नाध्याये वक्ष्यमाणलङ्कोदयप्राणा अभुक्तराशेश्च यत् भुक्तमंशादि तेन तद्राशिसम्बन्धिलङ्कोदयप्राणान् हत्वा त्रिंशता भजेत् लब्धमंशादेः प्राणास्तेषामुभयेषां यदैक्यं ते पदभुक्ता लङ्कोदयप्राणास्तेषां प्राणानां पदभुक्तलिप्तानां च यदन्तरं ते याताख्याः प्राणा भवन्ति। तैर्ग्रहाणां भुक्तयो निघ्नाश्चक्रस्य भगणस्य लिप्ताभिः षट्शताधिकैकविंशतिसहस्रै २१६०० र्भक्ताः कार्यास्ततो लब्धं यल्लिप्तादिकं तत् पृथक् पृथक् स्वस्वफलं तत् ग्रहेषु धनं कार्यं यदि समपदस्थार्कात् यातं प्राणरूपमुत्पन्नं भवेत्। विषमपदोत्पन्नं चेदृणमिति।

अत्र वासना। लङ्कासमपश्चिमग प्राणेन कलां समण्डलं भ्रमति। इति ब्रह्मसिद्धान्ते प्रतिपादितम् तत्र चापमण्डलस्य तिर्यक्स्थत्वात् प्राणानां कलानां चोद्गच्छतां पदमध्ये कदाचिदपि साम्यं न स्यात्। पदान्ते तु सदैव साम्यमेवातस्तदन्तरसंस्कारः क्रियते।

यच्चान्तरं फलं समपदस्थेऽर्के धनं भवति। प्राणराशेः सकाशात् कलाराशेरूनत्वात्। विषमपदस्थे तु कलाराशेरधिकत्वात् ऋण-गतमित्येवं साम्यं स्यात्। फलं च त्रैराशिकेन। यदि चक्रलिप्ता-तुल्यप्राणैरुदयद्भिर्ग्रहः स्वभुक्तितुल्या लिप्ताः प्राक् याति तद्यातप्राणैः किमिति। लब्धं ग्रहफलं तच्चार्कादीनां सर्वेषामपि संस्कार्यमिति। अत्र यदि च स्पष्टार्कात् स्वोदयप्राणैर्यातप्राणा उत्पाद्यन्ते तदा तत्फलसंस्कृता ग्रहा एकहेलयैव यात-भुजान्तर-चरान्तर-संस्कृता एव भवन्तीति। अथास्य यातफलस्य प्रकारान्तरेणानयनं तत्रैव श्लोकेन।

द्विघ्नार्कदोर्ज्या षड्भिर्वा भक्ता यातविनाडिकाः।
ताभिर्हता ग्रहगतिः खखाङ्काग्निहृता फलम्॥

अस्यायमर्थः। द्वाभ्यां हन्यत इति द्विघ्नः। स चासावर्कश्च तस्य या भुजज्या सा षड्भिर्भक्ता सती यातफलानि वा भवन्ति। बीजफलसंस्कृतं मध्यमं सायनमर्कं राश्याद्यं द्वाभ्यां सङ्गुण्य तस्य वक्ष्यमाणत्रिप्रश्नोक्त्या भुजज्या कार्या। तां षड्भिर्भजेद्यातपलानि भवन्तीत्यर्थः। तैर्ग्रहाणां गतिर्गुणिता षट्त्रिंशच्छत ३६०० भक्ता ग्रहाणां यातफलं भवति। तस्य च धनर्णसंस्कारः प्राग्वदेव।

अत्र वासना। * पदभुक्तलिप्तानां लङ्कोदयप्राणानां च सर्वेष्वपि पदार्द्धेषु परममन्तरं खतिथयः १५० प्राणास्तद्यथा। पदार्द्धे कलाः २७०० अमीषां ज्या १०६ क्रान्तिः १००६ अस्या ज्या ४३।१४ अस्या वर्गः १८६८।७ त्रिज्यावर्गात् २२५०० विशोध्य २०६३०।५३ मूलम् १४७।३८ स्वाहोरात्रार्द्धम्। अत्र त्र्यस्रं चेत्थम्। तत्र सार्द्धराशिज्या तिर्यक् कर्णः। क्रान्तिज्या याम्योत्तरा भुजः। अनयोर्वर्गान्तरमूलं स्वाहोरात्रे ऊर्द्धाधरा कोटिः ८६।५० सा च त्रिज्यापरिणता १०१ अस्याश्चापं २५५० एते सार्द्धराशेर्लङ्कोदय-

---

* अत्रादर्शपुस्तके सर्वेऽप्यङ्का अयथावल्लिखिता अशुद्धाश्चेति गणितद्वारा संशोध्य यथास्थानमस्माभिर्लिखिता इति।

प्राणाः। एषां सार्द्धराशिकलानां चान्तरम् १५० पदान्तेषु च साम्यमेव। पदार्द्धं च द्विगुणं पदं भवति। तज्ज्या च त्रिज्यैव। साऽपि सार्द्धं शतम्। प्राणाश्च षड्भिर्भक्ताः पलानि भवन्ति। सार्द्धशतस्य च षष्ठिविभागे पञ्चविंशतिर्भवति। अतः परमं यातं तदेव। अवान्तरेऽप्यनयैव दिशा द्विघ्नार्कदोर्ज्या षड्भक्ता यातफलानि भवन्ति। एतच्च सूक्ष्मप्रायम्। प्रागुक्तं तु स्थूलप्रायम्। पदार्द्धप्राणानामन्तर्गूढत्वात्। तैश्च फलानयने त्रैराशिकम्। यदि षट्त्रिंशच्छतपलैर्ग्रहस्य भुक्तितुल्या लिप्ता भवन्ति तदा तद्यातफलैः कियत्य इति। फलं च तदेव। तस्य च धनर्णसंस्कारः प्राग्वदिति। तथा चादित्यप्रतापसिद्धान्ते—

चण्डांशुबाहुभागोननिहतां नवतिं हरेत्।
खाष्टभिः स्यात् फलं यातं पलाद्यं तेन ताड़िता॥
ग्रहभुक्तिः खखाङ्गाग्निहृता लिप्तादिकं ग्रहे।
धनं समपदस्थेऽर्के हानिः स्याद्विषमे पदे ॥२॥ इति।

अथ य एतेऽर्द्धरात्रिका ग्रहा अहर्गणादानीतास्ते लङ्कायां तथा लङ्कात उत्तरतो मेरुं यावत् या याम्योत्तरा रेखा तस्यां ये देशास्तेषु च। अन्यदेशेषु तु देशान्तरफलसंस्कृताः सन्तः स्वदेशसमयाम्योत्तरे यो निरक्षो देशस्तद्देशीया भवन्ति। अतो देशान्तरफलानयनायार्यामाह—

**उज्जयिनीयाम्योत्तररेखायाः प्रागृणं धनं पश्चात्।**
**देशान्तरभुक्तिवधात् खखाष्टवेदैः कलाद्याप्तम् ॥१३॥**

लङ्कात आरभ्योज्जयिनीं मध्येकृत्य मेरुं यावत् या याम्योत्तरा रेखा तत्स्थितदेशेषु न देशान्तरकर्म कार्यम्। तथा च पुलिशाचार्यः।

उज्जयिनीरोहीतककुरुयमुनाहिमनिवासमेरूणाम्।
देशान्तरं न कार्यं तद्रेखामध्यसंस्थदेशेषु॥

ते च देशा यथा। तथा च खण्डखाद्यपद्धतौ लल्लः। लङ्का कुमारी काञ्ची पार्णाटा कृष्णा श्वेतशैलो वात्स्यगुल्ममुज्जयिनी गर्गराटमाश्रयो मालवनगरं चायुशिवं रोहीतकं कुरुक्षेत्रं हिमवान् मेरुश्चेति याम्योत्तररेखेयमिति। तस्याः प्रागपरतो वा यावद्योजनात्मकं स्वदेशस्य व्यवधानं तद्देशान्तरमित्युच्यते। तस्य ग्रहभुक्तेश्च यो वधस्तस्मात् खखाष्टवेदैरष्टचत्वारिंशच्छतैः ४८०० र्यत्कलादि फलं लब्धं तद्रेखायाः प्राग्वासिभिर्ग्रहेषु ऋणं पश्चाद्वासिभिर्धनं कार्यमिति।

अत्र वासना। लङ्कायमकोटिसिद्धपुररोमकावगाही भूगोलपरिणाहः खखखशराः ५००० तस्मात् प्रदेशात् यथा यथा लङ्कात उत्तरेण दक्षिणेन वा तथा तथा स्वदेशपूर्वापरावगाही भूगोलपरिणाहः स्वल्पो भवत्यतस्तस्य स्पष्टत्वं क्रियते। तथा चादित्यप्रतापसिद्धान्ते। परिधिर्द्वादशाभ्यस्तः पलकर्णोद्धृतः स्फुट इति। तत्र यस्मिन् देशे विषुवच्छाया अं०३।२२।३० तद्देशीयः स्पष्टपरिधिराचार्येणाचोपनिबद्धः खखाष्टवेदैरिति। केचित्तु एष एव भूपरिधिरित्याहुरत्र तद्विद एव प्रमाणमिति। बहुसम्मतस्तु भूपरिधिः खखखशरा इति। ततस्त्रैराशिकम्। यदि खखाष्टवेदसङ्ख्यैः स्पष्टभूपरिधियोजनैः पश्चान्मुखं भपञ्जरे भ्रमद्ग्रहस्य भुक्तितुल्या लिप्ताः प्राप्या भवन्ति तदा तद्देशान्तरयोजनैः किमिति। लब्धं कलादि तद्रेखायाः प्राग्वासिभिर्ग्रहेषु ऋणं पश्चाद्देशवासिभिश्च धनं कार्यम्। यतो रेखास्थदेशसूर्योदयात्प्रथमं तत्प्रदेशपूर्वस्थां सूर्योदयः पश्चाच्च तत्पश्चिमायामिति। अत्र च भुवो निम्नोन्नतत्वात् नदीपर्वताद्यन्तरितत्वाच्च पथां वक्रत्वं तेन रेखादेशस्वदेशान्तरस्य पौर्वापर्येण सम्यगपरिज्ञानात् श्रुतदेशान्तरयोजनैः स्पष्टैरेव कर्म कर्त्तुमुचितम्। तथा च ब्रह्मसिद्धान्ते।

भूपरिधिः खखखशरा रेखास्वाक्षान्तरेण सङ्गुणिताः।
भगणांशहृताः फलकृतिहीना देशान्तरस्य कृतिः॥

शेषपदमिति स्पष्टत्वमुक्तं तदत्राचार्येणोपेक्षितम्।

अथ य एते ग्रहा अहर्गणादागच्छन्ति ते मध्यमाः कक्षामण्डलस्थाः । न च ते तथाविधा एव प्रत्यहं यन्त्रैरुपलभ्यन्ते । स्पष्टग्रहाणां प्रतिमण्डले स्थितत्वादतो दृग्गणितैक्यार्थं स्पष्टीकरणमुच्यते। तत्र तावद्रविचन्द्रयोः स्पष्टीकरणाय राश्यर्द्धस्य राश्यर्द्धस्य पृथक् पृथक् स्वस्वभुजफलचापलिप्ताः पिण्डिताः प्रतिपादयितुं सर्वग्रहाणां च मन्दकर्मणि केन्द्रविधानायार्याद्वयमाह ।

पञ्चगुणाः ३५ सप्तरसाः ६७
शरनन्दाः ९५ षोडशेन्दवो ११६ गोऽर्काः १२९ ।
कृतगुणचन्द्रा १३४ राश्य-
र्द्धलिप्तिकाः पिण्डिताः सवितुः ॥१४॥
चन्द्रमसः सप्तनगा ७७
वसुमनवो १४८ नवनखा २०९ रसेषुयमाः २५६ ।
रसवसुयमला: २८६ षण्णव-
यमा २९६ ग्रहः केन्द्रमुच्चोनः * ॥१५॥

सवितू रवेः स्वकेन्द्रसम्बन्धिभुजराश्यर्द्धानां षण्णां फलं चापलिप्ताः पिण्डिताः पूर्वलिप्तामिश्रिताः पञ्चगुणा इत्यादयो यथासङ्ख्यं भवन्ति। तद्यथा । पञ्चगुणाः पञ्चत्रिंशत् केन्द्रभुजप्रथमराश्यर्द्धस्य फलचापलिप्ताः । सप्तरसाः सप्तषष्टिः केन्द्रभुजसम्बन्धिप्रथमराशेः फलचापलिप्ताः । शरनन्दाः पञ्चनवतिः सार्द्धराशेः । षोड़शेन्दवः षोड़शाधिकशतं राशिद्वयस्य । गोऽर्का एकोनविंशाधिकशतं सार्द्धराशिद्वयस्य ।

---

* अत्र वरुणोपाध्यायकृतटीकायाम् ।

आचितयात्र विकल्पं त्र्यधिकं केन्द्रं विशोधयेत् षड्भ्यः ।

षड़धिकमूनं षड्भिर्नवाधिकं शोधयेच्चक्रात् । अयमपि श्लोको मूलेऽस्ति ।

हतगुणचन्द्राश्चतुस्त्रिंशच्छतं राशित्रयस्य । एताश्चाधो विशुद्धा अधस्तनादूर्ध्वं विशोध्य प्रत्येकं राश्यर्द्धस्य यथाक्रमं खण्डकानि भवन्ति । तानि च पञ्चगुणा द्विगुणा वसुपक्षा इन्दुयमा विश्वे बाणा इति । चन्द्रमसस्तु स्वकेन्द्रभुजसम्बन्धिप्रथमराश्यर्द्धस्य फलचापलिप्ताः सप्तनगाः सप्तसप्ततिः । वसुमनवोऽष्टाचत्वारिंशच्छतं सकलराशेः । नवनखा नवाधिकं शतद्वयं सार्द्धराशेः । शरेषुयमाः षट्पञ्चाशच्छतद्वयं राशिद्वयस्य । रसवसुयमलाः षडशीत्यधिकशतद्वयं सार्द्धराशिद्वयस्य । षण्णवयमाश्चतुरूनशतत्रयं राशित्रयस्य । एता अपि अधोविशुद्धाः पृथक् पृथक् राश्यर्द्धस्य खण्डकानि भवन्ति । तानि च सप्तसप्ततिरेकसप्ततिरेकषष्टिः सप्तचत्वारिंशत् त्रिंशत् दश चेति । एतान्येव बालैरुद्घुष्यन्ते ।

पञ्चाग्नयः ३५ पाण्यनला ३२ गजाश्विन-२८
श्चन्द्राश्विनो २१ वह्निधराः १३ शरा ५ रवेः ।
विधोर्नगागाः ७७ कुनगाः ७१ कुषट्काः ६१
शैलाब्धय४७स्त्रिंश३०दतः खचन्द्राः १० ॥ इति

तथा सर्व एवार्कादिग्रहः स्वस्वमन्दोच्चेनोनः स्वस्वमन्दकेन्द्रं भवति । अयमर्थः । यस्य ग्रहस्य मन्दकेन्द्रं कर्त्तुमिष्टं भवेत् तस्माद्राश्यादिकं मन्दोच्चं यथास्वमपनयेत् । राशिभ्यो राशयः शोध्याः अंशेभ्योंऽशा लिप्ताभ्यो लिप्ता विलिप्ताभ्यो विलिप्ता इति । यच्च स्वस्थोनात् न शुद्ध्यति तदुपरितनात् गृहीत्वा शोध्यम् । यदा च राशिस्थानादपि राशयो न शुध्यन्ति तदा तत्र भगणाद्राशिद्वादशकं दत्त्वा शोधयेच्छेषं राश्यादिकं तस्य ग्रहस्य मन्दकेन्द्रं भवति । एवं ग्रहभुक्तेर्मन्दोच्चभुक्तिं कुर्यात् । सा च चन्द्रस्यैव भवति । तन्मन्दोच्चस्यैवगतिमत्त्वात् । अन्येषां तु मन्दोच्चभुक्तेरल्पतरत्वात् ग्रहभुक्तिरेव मन्दकेन्द्रभुक्तिर्भवति । भुजफलचापलिप्तानामुत्पत्तिरेवात्र वासना । तद्यथा । केन्द्राद्वक्ष्यमाणविधिना भुजं विधाय तस्य त्रिप्रश्नोक्त्या ज्यां गृह्णीयात्तां स्वमन्दोच्चवृत्तपरिध्यंशैर्हत्वा भगणांशैर्भजेल्लब्धं भुजफलज्या भवति । तस्यास्त्रिप्रश्नोक्त्या चापं भुजफलचापलिप्ता

भवन्ति । तत्र रवेः केन्द्रांशाः १५ एषांज्या ३८ "एतां सूर्यमन्द-नीचोच्चवृत्तपरिध्यंशानेव * चतुर्दश" तैर्हत्वा भगणांशैः ३६० भजेत् । लब्धं भुजफलज्या १।३१ अस्याश्चापम् ३५ एताः केन्द्रभुज-प्रथमराश्यर्द्धस्य भुजफलचापलिप्ताः । अथ केन्द्रांशाः ३० एषां ज्या ७५ प्राग्वद्भुजफलज्या २।५५ अस्याश्चापम् ६७ एताः केन्द्रभुजराशेर्भुज-फलचापलिप्ताः । अथ केन्द्रांशाः ४५ ज्या १०६ भुजफलज्या ४।७ चापम् ८५ । अथ केन्द्रांशाः ६० ज्या १३० भुजफलज्या ५।३ चापं ११६ । अथ केन्द्रांशाः ७५ ज्या १४५ भुजफलज्या ५।३८ चापम् १२८ । अथ केन्द्रांशाः ८० ज्या १५० भुजफलज्या ५।५० चाप-लिप्ताः १३४ । एवं चन्द्रमसोऽपि किञ्चिदूनैकत्रिंशत्परिध्यंशैः ३०।४६ स्वकेन्द्रांशानां ज्याभिः फलचापलिप्ता उत्पाद्याः । एतासु च त्रिज्याया लघुत्वात् किञ्चित् किञ्चिदन्तरमुपेक्षितम् । भट्टसोमे-श्वरेण तु रविचन्द्रपरममन्दफलं परक्रान्तिं च व्यासार्द्धं परिकल्प्य वक्ष्यमाणज्याखण्डकोत्पत्तिविधिना खण्डकान्युत्पादितानि । ज्या-मूलत्वात्तेषाम् । तच्च नो हृदयङ्गममिव न प्रतिभाति । तदत्र तद्विदः प्रमाणमिति । केन्द्रशब्देन चात्र वृत्तमध्यं पूर्वाचार्यैः सङ्केतितम् । तच्च कक्षामण्डले मन्दनीचोच्चवृत्तमध्यं मध्यग्रहचिह्नितप्रदेशे नीत्वा प्रदर्शयेत् । तद्यथा ! कक्षामण्डले यावन्तो राशिभागादयो मेषादि-प्रवृत्तग्रहेण भुक्तास्तेभ्यः स्वमन्दोच्चभुक्तराशिभागादीनि विशोध्य शेषा ये राशिभागादयस्तावद्भिः स्वमन्दोच्चभोगावधि नीचोच्चवृत्त-मध्यं वर्त्तते । तदेव तदन्तरं केन्द्रमुच्यते । स्वोच्चरेखातस्तावति प्रदेशे केन्द्रस्य शीघ्रगत्याऽग्रतो गतत्वात् । यतः स्वमन्दोच्चात् शीघ्रगतिर्ग्रहोऽतो ग्रहान्मन्दोच्चं विशोध्यते अधिकभुक्तिपरिज्ञानाय । उच्चशब्देन च प्रतिमण्डलस्य परमोच्चतोच्यते । तस्य प्रदेशस्य कक्षास्थग्रहस्य च यदन्तरं तत्केन्द्रमुच्यत इति ।

---

* अत्र मूलपुस्तके "शुक्रमन्दनीचोच्चवृत्तपरिध्यंशानेव चतुर्दश । नरवैराद्यत्वादन्यग्रहाणां गुणकलाघवाय च कल्पयित्वा" इत्यनभिज्ञप्रक्षिप्तेव पङ्क्तिरस्ति । साऽनुपयुक्तेति नास्माभिर्लिखिता ।

अथ केन्द्रादीनां भुजीकरणाय ग्रहाणां च मन्दफलस्य धनर्ण-व्यवस्थाप्रतिपादनाय चन्द्रस्य भुजान्तरसंस्कारायार्यामाह।

**विषमे भुक्तस्य समे भोग्यस्य स्वफलमृणधनं मध्ये।**
**भांशोऽर्कफलस्येन्दोः षड्राश्यूनाधिके केन्द्रे ॥१६॥**

ग्रहस्य मन्दकर्मणि यत् केन्द्रं राश्यादि प्रागानीतं तत्र त्रिभिस्त्रिभी राशिभिः पदानि प्रकल्पयेत्। तत्र विषमे पदे प्रथमे तृतीये च पदभुक्तस्य राश्यादेर्भुजरूपस्य स्वफलमुत्पाद्यम्। समे पदे द्वितीये चतुर्थे च पदभोग्यस्य राश्यादेर्भुजरूपस्य स्वफलमुत्पाद्यम्। अयमर्थः। केन्द्रं राश्यादि यदि प्रथमे पदे राशित्रयमध्ये भवति तदा यदेव पदस्य भुक्तं तदेव भुजोऽथ केन्द्रं द्वितीये पदे राशित्रयादूर्ध्वं राशिषट्कमध्ये भवति तदा षड्भ्यो राशिभ्यो विशोध्य शेषं यत्पदस्य भोग्यं स भुजोऽथ केन्द्रं तृतीये पदे राशिषट्कादूर्ध्वं राशिनवकादर्वाक् तदा तस्माद्राशिषट्कमपास्य शेषं पदभुक्तं भुजोऽथ केन्द्रं चतुर्थे पदे राशिनवकादूर्ध्वं तदा तद्राशिद्वादशकाद्विशोध्य शेषं पदभोग्यं भुजोऽयमेवार्थः खण्डखाद्यकोत्तरे श्लोकेन।

भुजः केन्द्रं त्रिभादूनमधिकं षड्भतश्च्युतम्।
षड्भिरूनं षडधिकं चक्राच्छुद्धं नवाधिकम्॥

भुजाच्च यत् स्वमन्दफलं तत् षड्राशिभ्यो हीने केन्द्रे मध्यग्रहे ऋणं कार्यम्। षड्भ्यस्त्वधिके धनमिति। तथाऽर्कफलस्य च यो भांशः सप्तविंशतितमो भागः स इन्दोश्चन्द्रस्यार्कफलवद्धनमृणं वा संस्कार्यम्। यद्यर्कस्य भुजफलं धनं तदा तद्भांशोऽपि चन्द्रस्य धनमृणं चेदृणमिति।

अत्र वासना यथाक्रमम्। समायामवनाविष्टप्रमाणकर्कटकेन वृत्तमालिखेत्तत्कक्षामण्डलं तत्केन्द्रञ्च भूगोलमध्यम्। तस्य वृत्तस्य मध्यावगाहिन्यौ पूर्वापरयाम्योत्तरे रेखे कुर्याद्यथा तत्र चत्वारि पदानि भवन्ति। प्रतिपदं च राशित्रयं प्रतिराशिं च त्रिंशत्

भागाः प्रतिभागं च षष्टिर्लिप्ता इति चिह्नयेत् । तत्र कक्षामण्डले पूर्ववदारभ्य मेषादयो राशयो ज्ञेयाः । ततो मेषादेरारभ्य यत्र राशौ भागे लिप्तायां च स्वमन्दोच्चं वर्त्तते तत्र चिह्नं कृत्वा तस्मा-च्चिह्नात् भूमध्यप्रापि सूत्रं नीत्वा रेखां कुर्यात् । ततो भूमध्या-त्तस्यामेव रेखायां स्वमन्दपरमफलज्यययाऽभीष्टव्यासार्द्धपरिणतया मितं सूत्रं प्रतीपं निदध्याद्यत्र सूत्रं समाप्तं तत्र केन्द्रं विचिन्त्य कक्षामण्डल-तुल्यव्यासार्द्धेन वृत्तमालिखेत्तन्मन्दप्रतिमण्डलमुच्यते । तत एव मन्दप्रतिमण्डलकेन्द्रात् पूर्वदत्तरेखानुसारेण व्याससूत्रं प्रतिमण्डल-परिधिं प्रापयेत्तत्र प्रदेशे प्रतिमण्डलस्य परमोच्चता । इतस्तस्योच्च-नीचवृत्तमध्यं तत् प्रतिमण्डलपरिध्यन्तरव्यासार्द्धेन च शलाकया मन्दोच्चनीचवृत्तं निर्माप्य तथा निदध्याद्यथा कक्षामण्डले मध्यग्रह-चिह्नितप्रदेशे तद्वृत्तमध्यं भवति । सुदीर्घया च वंशशलाकया भूम्यध प्रापिण्या तद्वृत्तं युक्तं कल्पयेत् ! तच्चालनाच्च फलव्यक्तिरेवं मन्दप्रतिमण्डलनीचोच्चवृत्तयोः संस्थानम् । तत्र प्रतिमण्डलपरि-धेर्यत्र नीचोच्चवृत्तपरिधिना सह सम्पातस्तत्र स्फुटो ग्रहस्तत्र च सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं स्वोच्चशलाकातो द्वितीयस्यां दिशि नीत्वा तावत्येव प्रतिमण्डलप्रदेशे बध्नीयात्तदर्द्धं भुजज्या । तस्य सूत्रस्य स्वोच्चशलाकया सह यत्र सम्पातस्तस्य प्रदेशस्य कक्षामण्डल-मध्यस्य चान्तरं कोटिज्या । सा च गोले ऊर्ध्वस्थिता दृश्यते । भुजज्या पूर्वापरा । छेद्यके च स्वोच्चप्राच्यपरा कोटिज्या तद्दक्षि-णोत्तरा च भुजज्या दृश्यते । अतः प्रतिमण्डले प्रथमपदे स्वोच्च-शलाकासम्पाताद्यत् ग्रहेण भुक्तं तस्य भुजज्यासंज्ञा । भोग्यस्य च कोटिज्यासंज्ञा । द्वितीयपदे चाधोगा कोटिज्या पार्श्वस्था भुजज्या ! तस्मात् प्रतिमण्डलार्धचक्राद्यद्भोग्यं तस्य भुजज्या भुक्तस्य कोटिज्या क्रियते । तृतीयपदे च प्रतिमण्डलार्द्धचक्रादधिकं यद्भुक्तं तस्य पार्श्वस्था भुजज्या । भोग्यस्य चाधोगा कोटिज्या द्वितीयपदवत् । चतुर्थपदे च यद्भोग्यं तस्य पार्श्वस्था भुजज्या । भुक्तस्य चोर्ध्वगा

कोटिज्या प्रथमपदवत्। तत्र भुजज्याया मान्दफलमुत्पाद्यम्। कोटिज्या तु शीघ्रकर्मण्युपयोज्यते। तत्रैव कर्णेन फलनिष्पत्तेः। तथा चादित्यप्रतापसिद्धान्ते। *

भवेत्कक्षाभवो मन्दपरिधिः प्रतिमण्डले।
मृदुकर्णगुणः स्पष्टः कक्षाव्यासदलोद्धृतः॥
तद्वाहुकोटितः प्राग्वत्कर्णः साध्योऽसकृत् स्फुटः।
तेन बाहुफलं भक्तं कक्षाव्यासार्द्धसङ्गुणम्॥
भवेन्मन्दफलं मध्यपरिध्युत्पन्नसम्मितम्।
यत्तेन न कृतः कर्णः फलार्थं मन्दकर्मणीति॥

केन्द्रस्य प्रथमपदे कक्षामण्डलस्थमध्यग्रहप्रदेशात् प्रतिमण्डलपरिधिस्पष्टग्रहप्रदेशः पश्चात् भवत्यतस्तत्र ग्रहस्य फलमृणं यावत् पदान्ते परममिति। द्वितीयपदे तु मध्यग्रहप्रदेशात् स्पष्टग्रहप्रदेशोऽग्रतोऽतो धनं फलं भवति। तत्र तु धनफलेन परममृणमपनीयमानं तावन्न क्षयं व्रजति यावच्चक्रार्द्धमत उक्तम्। षड्भाद्यूनकेन्द्रे फलमृणमिति। चक्रार्द्धतुल्ये केन्द्रे धनर्णसाम्यात् फलाभावः। चक्रार्द्धाधिके पुनः केन्द्रे मध्यग्रहप्रदेशात् स्पष्टग्रहप्रदेशोऽग्रतो भवति। ततस्तृतीयपदे द्वितीयपदवत् ग्रहस्य फलं धनं यावत्पदान्ते परमम्। चतुर्थपदे तु प्रथमपदवत् मध्यग्रहप्रदेशात् स्पष्टग्रहप्रदेशः पश्चादतः फलमृणं कार्यम्। तत्र तृतीयपदपरमधनं चतुर्थपदोक्तमक्षयफलेनापनीयमानं चक्रं यावदतिरिच्यत एवात उक्तम्। षड्भाद्यधिके केन्द्रे फलं धनमिति। चक्रतुल्ये केन्द्रे धनर्णसाम्यात् फलाभाव इति। ग्रहाश्च मध्यार्कोदयकालिकाः सन्त्यतो भुजान्तरफलेन स्पष्टार्कोदयकालिकाः क्रियन्ते। मध्यस्फुटार्कयोरन्तरं हि भुजफलं तद्वशादुत्पन्नत्वात् भुजान्तरमुच्यते। तत्रापमण्डले

* अत्र मूलपुस्तके द्वितीयश्लोके "तद्भानुकोटितः" इति तृतीयश्लोके च "फलार्थं मन्दकर्मतेति" पाठो वर्त्तते।

यावत् खषष्टिक्षखिसङ्ख्याश्चक्रलिप्ता * २१६०० उत्क्रामन्ति तावद्ग्रहः स्वभुक्तितुल्या लिप्ताः प्राग्याति । ततस्त्रैराशिकम् । यदि भगणकलाभिः स्वभुक्तितुल्या लिप्तास्तदाऽर्कभुजफलतुल्यलिप्ताभिः कियत्य इति । धनर्णलब्धं च कलाद्यं भानाविव धनर्णमुत्पन्नं तच्च रव्यादीनां च सर्वेषामपि कर्त्तुमुचितम् । तत्पुनराचार्येणोपेक्ष्याऽत्रैकस्य चन्द्रस्यैवोपनिबद्धम् । तत्र लाघवार्थं चन्द्रभुक्तौ किञ्चिदूनान् दश संयोज्याष्टभिः शतैर्भाज्यभाजकयोरपवर्त्तने सप्तविंशतिरेवार्कफलस्य भाजक उपनिबद्ध इति । अत्र चार्कफलस्याप्युदयान्तरसंस्कार उचितस्तथा च राजमृगाङ्के ।

धनर्णगैः सहस्रांशोः फलाल्लङ्कोदयासुभिः ।
हताद्राशिकलाप्तासुफलैः स्युः सूर्यवद् ग्रहाः ॥ इति ।

तदप्यत्रोपेक्षितमिति सर्वमुपपन्नम् ॥

अथ रविस्पष्टीकरणकर्मक्रम उच्यते । तत्रेष्टदैवसिकं रविमुक्तविधिनाऽहर्गणात्समानीय बीजयातदेशान्तरैः संस्कृत्य तस्मात् "भानुमतो मन्दोच्च"मित्याद्युत्तरोक्तं स्पष्टमुच्चं विशोध्य मन्दकेन्द्रं कुर्यात् । तस्मादुक्तविधिना ग्रहस्य भुक्तेश्च फलस्य धनर्णसंज्ञां विधाय भुजीकृत्य च भुजलिप्तापिण्डं कुर्यात्तद्यथा । राशिस्थानं त्रिंशता सङ्गुण्याधःस्थांशांस्तत्र संयोज्य तत् षष्ट्या हत्वाऽधस्तना लिप्तास्तत्र योजयेत् । एवं भुजो लिप्तीकृतो भवेत् । तस्य लिप्ताराशौ राश्यर्द्धप्रमाणेन नवशत्या भागमपहरेल्लब्धं भुक्तानि भुजफलचापलिप्ताखण्डानि । शेषं कलाविकलारूपं विकलसंज्ञमनष्टं स्थापयेत् । अत्र खण्डखाद्यकोत्तरे श्लोकः ।

केन्द्राङ्गजं कलीकृत्य विभजेन्नवभिः शतैः ।
लब्धं भुक्तानि खण्डानि शेषं विकलमुच्यते ॥

ततो भुक्तभोग्यखण्डकयोश्चिह्नं विधायोत्तरोक्तार्याविधिना भोग्यखण्डकं स्फुटं कुर्यात्तद्यथा ।

* अत्र मूलपुस्तके "खषष्ठ्यसङ्ख्या" इत्येव तदक्षरचिह्नमेव लिखितमस्ति ।

**गतभोग्यखण्डकान्तर-दलविकलवधाच्छतैर्नवभिराप्ता ।**
**तद्युतिदलं युतोनं भोग्यादूनाधिकं भोग्यम् ॥१७॥ ***

अयमर्थः । गतं च भोग्यं च गतभोग्ये ते च ते खण्डे च तयोर्यदन्तरं विशेषस्तस्य च यद्दलं अर्द्धं तेन विकलस्य यो वधो घातस्तस्मान्नवभिः शतैर्या आप्तिर्लब्धं फलं तया तद्युतिदलं तयोर्भुक्तभोग्ययोः खण्डकयोर्युतिदलं योगार्द्धं तद्भोग्यात् खण्डकादूनाधिकं सत् युतोनं कार्यम् । यदि योगार्द्धं भोग्यखण्डकादूनं तल्लब्धफलेन युतं कार्यम् । अधिकं चेत्तदा ऊनम् । एतद्भोग्यखण्डं कर्मयोग्यं स्फुटं भवतीत्यत्रोपपत्तिः । यथाऽऽयतचतुरस्रे क्षेत्रे विषमयोर्भुजप्रतिभुजयोर्युतिदलं कृतं समभुजत्वमासादयति तद्वद्गतभोग्यखण्डकयोरपि । तद्यथा । कल्पितयोरनयोः १५।५ विवरदलम् ५ अनेन खण्डकयोर्युतिदलं १० अधिकम् १५ ऊनम् ५ प्राक्निर्दिष्टयोस्तुल्यं भवेत् । अत्र च त्रैराशिकेन फलम् । यदि राश्यर्द्धलिप्ताभिर्नवशत्या गतभोग्यखण्डकान्तरदलं लभ्यते तदा नवशतहृतावशेषेण विकलशब्दवाच्येन किमिति फलं तद्युतिदले भोग्यखण्डापेक्षयोनेऽधिकं क्रियते । अधिके चोनमेवं भोग्यखण्डं स्फुटं भवेत् । विकलाभावे गतभोग्यखण्डकयुतिदलतुल्यमेव स्फुटं खण्डकं जायते । क्रमेणापचयो यावत्परा विकलोपचितिर्नवशती । तावति विकले भोग्यखण्डकमेव स्फुटं खण्डकं भवतीति । ततः स्पष्टखण्डकेन विकलं हत्वा नवशत्या भजेल्लब्धं फलं भुक्तखण्डकैक्ये योजितं ग्रहस्य मन्दफलं

---

* अत्र भट्टोत्पलेन—

"द्विकृतांशोनं रविफलमिन्दोर्वसुवेदभागयुतम् ।
अर्कफलभुक्तिघाताद्गगणकलाप्तं भुजान्तरं रविवत् ॥"

अयमप्युत्तराध्यायश्लोकः स्वकृतखण्डखाद्यकटीकायां मूलोक्तिरिति व्याख्यातः । अत्र च वासनाभाष्ये "तत् पुनरुत्तरसंस्कारे द्विकृतांशोनं" इत्यादिकः कियानप्यंशोऽस्यैव श्लोकस्य तथैवोपन्यस्त इति ।

भवेत्। तत्पुनरुत्तरसंस्कारे द्विकृतांशोनं तद्रवेर्मन्दफलं भवति। अयमर्थः। रविकेन्द्रजातं मन्दफलं पृथगवस्थाप्य द्वाचत्वारिंशता भजेत्। लब्धं यत् फलं तत् पूर्वस्माद्विशोधयेदेवं रवेः फलं भवत्येवमिन्दोरपि स्वोच्चेन स्वीयभुजफलचापलिप्ताखण्डकैः फलं साधयेत्। तदप्युत्तरसंस्कारेण वसुवेदभागयुतं स्वाष्टचत्वारिंशद्भागयुतं तच्चन्द्रस्य मन्दफलं भवत्यत्र वासना। ग्रहस्य स्वमन्दकेन्द्रस्य या भुजज्या सा कक्षामण्डलसम्बन्धिनी। भुजफलज्या च मन्दनीचोच्चवृत्तसम्बन्धिनी तया स्फुटकोट्या च कर्णमानीय पुनः सा कक्षामण्डले परिणाम्यते। अत्र च नीचोच्चवृत्तसम्बन्धिपरिधेः फलज्या स्वल्पान्तरत्वात् पूर्वाचार्यैः कक्षामण्डल एव प्रकल्पिता तस्यास्यायं मन्दभुजफलं भवति। रवेर्भुजफलचापलिप्ताखण्डकानि चक्रपरिध्यंशैश्चतुर्दशभिरुत्पादितानि। रविमन्दनीचोच्चवृत्तपरिधिश्च त्रिभागोनाश्चतुर्दशभागाः सन्ति। तथा च ब्रह्मसिद्धान्ते। सूर्यस्य मनुद्वितयं त्र्यंशोनं दिनदल इति। स च त्रिभागः परिधेर्द्विकृतांश इत्यत उक्तेषु खण्डकेषु उत्पादितफलात् द्विकृतांशाः शोध्यन्ते। चन्द्रस्य त्वेकत्रिंशता परिधिभागैः किञ्चिदूनभुजफलचापलिप्ताखण्डकान्युत्पादितानि। तस्य च स्वपरिधिरेकत्रिंशत् षट्त्रिंशत्कला समधिका ३१।३६। ब्रह्मसिद्धान्ते। द्युदले जिनलिप्तोनं दशनद्वितयमिति। अतो वसुवेदभागयुतं चन्द्रफलं विदध्यादित्युपपन्नम्।

अथ रविचन्द्रयोर्भुक्तिमन्दफलस्योत्पत्तये तस्य च धनर्णसंस्काराय शेषग्रहाणां च भुक्तिमन्दफलातिदेशायार्यामाह।

गतिभोग्यखण्डकवधा-
ल्लब्धं नवभिः शतै रवीन्दुफलम्।
प्राग्वच्छुक्रादीनां
चयधनधनहानयः स्वगतौ ॥१८॥

गतिश्च भोग्यखण्डं च तयोर्यो वधः। अयमर्थः। रवीन्द्वोः स्वभुजफलोत्पत्तावुक्तविधिना यत् स्पष्टखण्डकं तदिह भोग्यखण्डकमुच्यते। तस्य रवीन्द्वोः स्वस्वकेन्द्रभुक्तेश्च यो वधस्तस्मान्नवघ्नत्या यल्लब्धं तदिनकेन्द्रसम्बन्धि विकलांशोनं चन्द्रकेन्द्रभुक्तिसम्बन्धि वसुवेदभागयुतं सत् स्वस्वभुक्तिमन्दफलं भवति। तच्च केन्द्रपदवशात् यथाक्रमं चयधनधनह्रानिरूपं स्वगतौ संस्कार्यम्। शेषग्रहाणां च शुक्रादीनां भुक्तिमन्दफलं तत्संस्कारश्च प्राग्वद्रवीन्दुवदेवेति। स्वस्वकेन्द्रभुक्ति-स्वस्वफलानयनस्पष्टखण्डकवधं नवघ्नत्या भजेल्लब्धं यत् फलं तत् केन्द्रपदवशात् चयधनधनह्रानिरूपं संस्कुर्यादित्यर्थः। अत्र च ग्रहमन्दफलस्य शुक्रस्य सूर्यवत् * फलमित्यादिवक्ष्यमाणविधिर्भुक्तिफलस्यापि कार्यः। अत्र शेषग्रहाणां भौमादीनामिति वाच्ये शुक्रादीनामिति शुक्रबुधभौमगुरुशनीनामिति वक्ष्यमाणमन्दफलसंस्कारानुरोधेनोक्तम्। भुक्तेरपि तेषां स एव संस्कार इति सूचनार्थं च।

अत्र वासना। स्फुटभुक्तिरतीतैष्यद्ग्रहान्तरं वर्त्तमानेऽह्नि, इति ब्रह्मसिद्धान्ते उक्तम्। अतोऽतीतदिनग्रहस्य एष्यदिनग्रहस्य च यदन्तरं सैव तस्य ग्रहस्य तस्मिन् दिने स्फुटा भुक्तिर्नान्यः कोऽपि पदार्थ इति। ग्रहफलसम्बन्धिन एव गुणकभाजकक्षेपशोधनकास्त्रैराशिके युज्यन्ते। फलस्य तु धनर्णसंस्कारव्यवस्था यथास्थितैव चयधनधनह्रानयः केन्द्रपदक्रमेणेति।

अथेष्टकालिकरविचन्द्राभ्यां शुक्लप्रतिपदादेर्गततिथीनां वर्त्तमान तिथ्याद्यन्तयोश्चानयनमार्य्ययाह।

---

* अत्र मूलपुस्तके "सूर्यस्य पूर्ववत् फल" मिति पाठो वर्त्तते। वक्ष्यमाणो मन्दफलानयनविधिश्च—

"शुक्रस्य सूर्यवत् फलमिन्दुसुतस्य द्विसङ्गुणितम्।
भौमस्य पञ्चगुणितं गुरोः स्वरांशेन संयुतं द्विगुणम्।
सौरेर्मनुभागयुतं चतुर्गुणं"

एवमस्तीति मूलोक्तपाठः प्रत्याख्यात इति।

अर्कोनचन्द्रलिप्ताः

खयमस्वर७२०भाजिताः फलं तिथयः ।

गतगम्ये षष्टि६०गुणे

भुक्त्यन्तरभाजिते घटिकाः ॥१६॥

अर्केन ऊनोऽर्कोनः स चासौ चन्द्रश्च तस्य या लिप्तास्ताः खयमस्वरभाजिताः सत्यः फलं गततिथयो भवन्ति । वर्त्तमानतिथेश्च ये गतगम्ये ते षष्टिहते भुक्त्यन्तरभाजिते सती स्वीयाः स्वीया घटिका भवन्ति । अयमर्थः । इष्टकालिकावर्कचन्द्रौ स्फुटौ सदिनभुक्तिकौ संस्थाप्य ततश्चन्द्राद्राश्यादिकमर्कं यथास्वं विशोधयेद्यदि चन्द्रादर्कौ न शुद्ध्यति तदा तत्र भगणं दत्त्वा विशोधयेच्छेषं लिप्तीकृत्य विंशत्यधिकसप्तशतैर्भजेल्लब्धं शुक्लप्रतिपदादेर्गततिथयः । शेषं गतमित्युच्यते ! तस्मिंश्च खयमस्वरेभ्यः शोधिते शेषं गम्यमित्युच्यते । तौ गतगम्याख्यौ द्वावपि राशी षष्ट्या सङ्गुण्य रविचन्द्रयोर्भुक्त्यन्तरेण सवर्णयित्वा भजेत् । पृथक् पृथक् गतस्य गम्यस्य च वर्त्तमानतिथेरादिकालस्यान्तकालस्य च घटिका लभ्यन्त इति ।

अत्र वासना । अमावास्यान्ते रविचन्द्रौ द्वावपि स्वस्वकक्षास्थावपमण्डलभोगेन तुल्यावेकसूत्रगौ भवतस्तदनन्तरं प्रतिदिनं चन्द्रस्य शीघ्रगत्वाद्रविः पश्चादवलम्बते । अतो रविभुक्तं चन्द्रभुक्ताद्विशोध्यते येन तयोरन्तरं सिद्धं भवति । तयोश्चान्तरे द्वादशभिर्भागैरेकैका तिथिर्भवति । तिथिर्त्रिंशता च चान्द्रो मासस्तस्मिंश्चामावास्यान्तात् प्रतिद्वितीयामावास्यान्तं यावत् रविचन्द्रयोरन्तरे भगणो भवति । ततो भगणकलानां त्रिंशत्तमे भागे खयमस्वरास्तैस्त्रैराशिकम् । खयमस्वरकलाभिरेकतिथिस्तदाऽनेन रविचन्द्रान्तरेण कियत्य इति लब्धं गततिथयः । शेषेण च त्रैराशिकम् । यदि

भुक्त्यन्तरकलाभिः षष्टिर्घटिकास्तदा शेषलिप्ताभिर्गताभिर्गम्याभिर्वा कियत्य इति लब्धमाद्यन्तकालघटिका इत्युपपन्नम्।

अथ सर्वग्रहाणां भुज्यमाननक्षत्रस्य तदाद्यन्तयोश्चानयनमाह।

भान्यश्विन्यादीनि
ग्रहलिप्ताः खखवसू ८०० हृता लब्धम्।
भुक्तिहृते गतगम्ये
दिवसाः षष्ट्या हृते घटिकाः ॥२०॥

ग्रहस्य रव्यादेरिष्टस्य लिप्ताः खखवसूहृताः कार्याः। लब्धमश्विन्यादीनि ग्रहभुक्तानि भानि भवन्ति। अयमर्थः। यस्य ग्रहस्य यस्मिन् काले भुज्यमानं नक्षत्रं ज्ञातुमिष्टं भवेत् तात्कालिकं तं ग्रहमुक्तविधिना स्फुटीकृत्य लिप्तीकुर्यात्। तासां लिप्तानामष्टशत्या भागे हृते लब्धाङ्कसमानि ग्रहभुक्तानि भानि भवन्ति। शेषं भुज्यमाननक्षत्रस्य गतमुच्यते। तदष्टशतेभ्यो विशोध्य शेषं गम्यं भवेत्। ते गतगम्ये उभे अपि लिप्तात्मके ग्रहभुक्त्या सवर्णयित्वा हृते सती ग्रहेण नक्षत्रस्य यथाक्रमं भुक्तभोग्या दिवसा भवन्ति। शेषे च षष्ट्या हृते तेनैव भाजकेन घटिकादि भवेदिति।

अत्र वासना॥ भगणे सप्तविंशतिनक्षत्राणि भवन्त्यतो भगणकलानां सप्तविंशतितमे भागेऽष्टशत्यां नक्षत्रभोगप्रमाणं भवति। अतस्त्रैराशिकम्। यदि लिप्तानामष्टशत्या एकं भं भवति तदाऽमूभिर्ग्रहलिप्ताभिः कियदिति लब्धं भुक्तान्यश्विन्यादिनक्षत्राणि। शेषेण गतेन तस्मिंश्चाष्टशतेभ्यः शोधिते शेषेण गम्येन च त्रैराशिकम्। यदि ग्रहस्फुटभुक्त्या एको दिवसस्तदनेन गतेन गम्येन वा कियदिति। लब्धं दिनानि। तच्छेषे च षष्ट्या हृते तेनैव च्छेदेन घटिकाद्यानेयम्। एतच्चन्द्रस्यैव स्फुटम्। शेषग्रहाणां तु स्थूलं प्रतिदिनं स्फुटभुक्तेरन्यथात्वादिति॥

अथेष्टरविचन्द्राभ्यां भुक्तविष्कम्भादियोगानां भुज्यमानाद्यन्तयोस्त्वानयनमार्ययाह ।

रविचन्द्रयोगलिप्ताः
खखवसुभि८००र्भाजिताः फलं योगाः ।
गतगम्ये षष्टिगुणे
गतियोगविभाजिते घटिकाः ॥२१॥

रविश्च चन्द्रश्च रविचन्द्रौ तयोर्योगस्तस्य या लिप्तास्ताः खखवसुभिर्भाजिताः कार्याः । फलं भुक्ता विष्कम्भादयो योगा भवन्ति । गते गम्ये च षष्टिगुणे रविचन्द्रयोर्गतियोगेन विभाजिते कार्ये । फलं वर्त्तमानयोगस्य आद्यन्तकालयोर्घटिका भवन्ति ।

अत्र वासना । रविचन्द्रयोः स्वस्वकक्षास्थयोः प्राग्व्रजतोरपमण्डलभोगयोगेन भगणतुल्येन विष्कम्भाद्याः सप्तविंशतिर्योगाः पूर्वाचार्यैः प्रकल्पिताः । अत एव योगभोगप्रमाणे भगणकलानां सप्तविंशतितमो भागः सिद्धः स चाष्टौ शतानि । अतो रविचन्द्रभोगयोगकलानां अयमेव भाजको निबद्धो गते च गम्ये च भुक्तियोगेन त्रैराशिकम् । यदि भुक्तियोगकलाभिः षष्टिर्घटिकास्तदाऽमूभिर्गतगम्याख्यरविचन्द्रयोगकलाभिः कियत्य इति । लब्धं गतगम्याख्याद्यन्तकालघटिका इति ।

अथ चलकरणानां बवादीनामानयनमार्ययाऽऽह ।

व्यर्केन्दुकला भक्ताः खरसगुणै ३६० र्लब्धमूनमेकेन ।
चलकरणानि बवादीन्यग७हृतशेषे तिथिवदन्यत् ॥२२॥

विगतोऽर्को यस्मादसौ व्यर्कः स चासाविन्दुश्च तस्य कलास्ताः खरसगुणैः षष्ट्यधिकशतत्रयेण भक्ताः कार्यास्ततो यल्लब्धं तदेकेनोनं कार्यम् । तस्मादगहृतशेषे सप्तभक्तावशिष्टे बवादीनि चरकरणानि

भवन्ति । अन्यच्च गतगम्याद्यं तिथिवत् कार्यम् । गतगम्ये षष्टिगुणे भुक्त्यन्तरभाजिते वर्त्तमानकरणस्याद्यन्तकालघटिका भवन्तीति ।

अत्र वासना । करणानां तिथ्यर्द्धभोगित्वात् तिथिभोगप्रमाणस्य खयमस्वरा७२०णामर्द्धेन खरसगुणैः ३६० करणानि लभ्यन्ते । लब्धं चात एकोनं क्रियते यतः शुक्लप्रतिपदो द्वितीयार्द्धात् ववादीनां प्रवृत्तिस्तत्प्रथमार्द्धस्य किंस्तुघ्नाख्यस्थिरकरणेनाघ्रातत्वात् । अत्र च राशिभस्य तिथियोगकरणानां सम्बन्धि तस्य ग्रहबिम्बस्य यावदुभयाश्रयावस्थितिस्तावान् पुण्यकालोऽतस्तदानयनम् । तथा च भट्टोत्पलः ॥

मानार्द्धात् षष्टिगुणाद्भुक्तिहृतान्नाड़िकादिलब्धेन ।
राश्यन्तात्प्रागादिः पश्चादन्तोऽर्कसंक्रान्तेः ॥ (१)

अयमर्थः । वक्ष्यमाणविधिना रवेर्बिम्बमानीय तस्यार्द्धात् षष्टिगुणात् रविस्फुटभुक्तिहृताद्यन्नाड़िकादि फलं तेन राश्यन्तात् करणागतसंक्रान्तिकालात् प्राक् पूर्वमादिरारम्भकालस्तावतैव कालेन पश्चादन्तः समाप्तिः । आद्यन्तकालयोगतुल्यः पुण्यकालः । एवं भस्यापि । अर्कग्रहणं चात्रोपलक्षणार्थम् । अन्येषामपि ग्रहाणां स्वस्वबिम्बमानार्द्धेन स्वस्वभुक्त्या चाद्यन्तकालानयनमेवमेव कार्यम् । तिथिकरणयोश्च चन्द्रबिम्बमानार्द्धेन रविचन्द्रभुक्त्यन्तरेणाद्यन्तकालानयनम् । योगस्य रविशशिभुक्तियोगेनेति । अत्र त्रैराशिकम् । यदि भुक्त्या भुक्त्यन्तरेण भुक्तियोगेन वा षष्टिर्घटिकास्तद्ग्रहमानार्द्धलिप्ताभिः कियत्य इति ।

अथ स्थिरकरणानां तिथ्यर्द्धावस्थितिनियममाह ।

---

(१) अत्र वरुणोपाध्यायटीकायाम् ।
"संक्रान्तिपुण्यकाले यल्लब्धं नाड़िकादि तत् द्विगुणम् ।
स्नानजपदानहोमादिकोऽत्र धर्मो विशिष्टफलः ॥" अयमपि श्लोको वर्त्तते ।

कृष्णाचतुर्दश्यन्ते शकुनिः पर्वणि चतुष्पदं प्रथमे ।
तिथ्यर्द्धेऽन्त्ये नागं किंस्तुघ्नं प्रतिपदाद्यर्द्धे ॥२३॥

स्पष्टार्थेयमार्या । आगम एवात्र प्रमाणमिति ॥

अथ रविशशिनोरपमण्डलभोगयोगे चक्रार्द्धचक्रतुल्ये व्यतिपात-वैधृताख्यौ पातौ भवतः । तत्रार्कचन्द्रयोश्चक्रार्द्धचक्रकालोनत्वविधानाय तत्र च सति पातस्य सम्भवासम्भवज्ञानमाह ।

रविचन्द्रयुतौ व्यतिपातवैधृतौ भार्द्धचक्रयोर्दिवसाः ।
गतियुतिहृतमूनाधिकमपक्रमांशैः समैः पातः ॥२४॥

रविश्च चन्द्रश्च रविचन्द्रौ तयोर्युतौ सत्यां भार्द्धे चक्रार्द्धे चक्रे भगणे च संजाते तत्काले यद्युभयोरपि रविचन्द्रयोरपक्रमांशौ स्वस्वक्रान्त्यंशा दक्षिणा उत्तरा वा तुल्या भवन्ति तदा यथाक्रमं व्यतिपातवैधृताख्यौ पातौ भवतः । यदि गोलावस्थानसाम्ये सति रविचन्द्रयोर्द्वयोरपि याम्योत्तरायनभेदो भवति तथा च सत्युभयोरपि योगे यदा चक्रार्द्धं भवेत्तदाद्वयोरपि यदि क्रान्त्योः समत्वं स्यात्तदा व्यतिपातो नाम पातः । तथा गोलदिग्भेदेऽयनसमत्वे च सति रविचन्द्रयोर्योगे यदा चक्रं भवति तदा च तत्स्वक्रान्त्योः समत्वे वैधृतो नाम पात इत्यर्थः । योगे क्षते चक्रार्द्धाच्चक्राच्चोनाधिकं चेद्भवति तदा तद्रविशशिगतियोगहृतं सद्दिनादि फलं भवति । तेन चक्रार्द्धचक्राभ्यामूने सति यत्कालिकौ रविचन्द्रौ तस्मात् कालाद्भविष्यच्चक्रार्द्धचक्रकालोऽधिके त्वतीत इति । एतदुक्तं भवति । इष्टकालिकौ रविचन्द्रावुक्तविधिना स्फुटौ विधाय तयोरुभयोरपि यथाऽऽयाताय-नांशान् दत्वा योगः कार्यः । तस्मिन् सति यदि चक्रार्द्धं चक्रं वा भवति तदा रविचन्द्रयोर्द्वयोरपि वक्ष्यमाणत्रिप्रश्नोक्त्या क्रान्तिं कुर्यात् । चन्द्रक्रान्तिश्च वक्ष्यमाणचन्द्रग्रहोक्तविधिना प्राग्दत्तायनांशक्षीणात् चन्द्राद्विक्षेपं विधाय तेन विक्षेपेण एकदिक्त्वे चन्द्रक्रान्तिर्युक्ता कार्या

भिन्नदिक्त्वे च तयोरन्तरमेवं चन्द्रस्य स्व क्रान्तिर्भवति। अन्तरस्य शेषवशात् दिगवधारणीया। ततस्तयोर्द्वयोरपिक्रान्त्योर्यदा समत्वं तदा स पातस्य मध्यकालः। यदा च सायनरविचन्द्रयोर्योगे चक्रार्द्धं चक्रं वा ऊनं भवति तदा रविचन्द्रयोगं यथासम्भवं चक्रार्द्धाच्चक्राद्वा विशोध्य शेषस्योनसंज्ञस्य लिप्तीकृतस्य रविशशिभुक्तियोगेन भागो हार्यः फलं दिनादि भवति। तेन भविष्यच्चक्रार्द्धचक्रकालोऽधिके तु चक्रार्द्धचक्राद्रविशशियोगे तस्माच्चक्रार्द्धं चक्रं वा यथासम्भवं विशोध्य शेषस्याधिकसंज्ञस्य भुक्तियोगभक्तस्य दिनादिफलेनातीतश्चक्रार्द्धचक्रकाल इति। एवमतीतेऽनागते वा काले ज्ञाते तेन कालेन रविशशिभुक्ती सङ्गुण्य स्वस्वच्छेदेन लब्धमुपर्युपरि संयोज्य तत् फलमतीते चक्रार्द्धचक्रकाले ज्ञाते ऊनं भविष्ये च धनं तत्कालमध्यमयो रविचन्द्रयोः संस्कृत्य तौ स्फुटीकृत्य तयोः पुनर्योगं विधाय तुल्यं चक्रार्द्धं चक्रं वा जातं भवति नवेति चेत्यत्र यदि चक्रार्द्धं चक्रं वा जातं भवति तदा द्वयोरपि प्राग्वत् स्वस्वक्रान्तिर्विधेया। नो चेत् पुनरपि एतत्कर्म तावद्यावत् स्फुटयोः सायनयो रविचन्द्रयोर्योगे सति चक्रार्द्धं चक्रं वा भवति। तत्र च यदि तयोः स्वक्रान्त्योः साम्यं स्यात्तदा स पातमध्यकालोऽथ साम्यं न स्यात् तदा तस्मात्कालात् पातमध्यकालस्यातीतानागतत्वस्यापि ज्ञानाय खण्डखाद्यकोत्तरे श्लोकाः।

चक्रार्द्धचक्रयोः काले क्रान्त्योः साम्यं न चेत्तदा।
विक्षेपः शशिनः क्रान्तौ धनर्णं यद्भवेत्तदा॥
कार्योऽन्यथा रविक्रान्तौ तच्चापं क्रान्तिखण्डकैः।
तद्वाह्णोः पातचन्द्रः स्याद्युक्त्या पूर्वेन्दुतोऽसकृत्॥
विवरात् पूर्वचापेन्द्वोः पातो भुक्त्या तु वासरैः।
पूर्वचन्द्रेऽधिके न्यूने चापचन्द्राद्गतैष्यकः॥

अयमर्थः। रविचन्द्रयोर्योगे चक्रार्द्धचक्रकाले क्रान्त्योः साम्यं चेन्न भवति तदा चन्द्रविक्षेपश्चन्द्रक्रान्तौ धनमृणं वा यत् कृतमासीत्

तस्मादन्यथा वैपरीत्येन स विक्षेपो रविक्रान्तौ विधेयः। यदि चन्द्रक्रान्तौ विक्षेपो धनं कृत आसीत्तदाऽसौ रविक्रान्तौ विशोध्य ऋणं चेत्कृतस्तद्धनं कार्यः। एवं तस्या विक्षेपसंस्कृतरविक्रान्तेः क्रान्तिखण्डैर्वक्ष्यमाणत्रिप्रश्नोक्तैर्ज्याखण्डरूपैः प्रकल्पितैरुक्तविधिना चापं कार्यम्। तद्यथा। विक्षेपसंस्कृतरविक्रान्तेः द्विषट् प्रभृति यावन्ति खण्डानि शुद्ध्यन्ति तावन्ति संशोध्य तत्र चिह्नं कार्यम्। तेन च मन्दकर्मवदसकृत् स्पष्टखण्डकमुत्पाद्य तेन नवशतविकल वधाल्लब्धं यत्कलाद्यं तद्भुक्तखण्डकसङ्ख्याहतेषु नवशतेषु संयोजयेत्। एवं कलादिरूपं चापं भवति। तत् षष्ट्या विभक्तमंशादि तत् त्रिंशता राश्यादि तच्चापं पूर्वेन्दुतो भुजस्य युक्त्या पातकालीनचन्द्रो भवति। स चापचन्द्र इत्युच्यते। एतदुक्तं भवति। यदि पूर्वेन्दुरयनार्द्धचक्रकालिकः प्रथमे पदे भवेत्तदा यदेव चापं स एव पातकालीनश्चन्द्रोऽथ पूर्वेन्दुर्द्वितीये पदे तदा तच्चापं राशिषट्काद्विशोध्य शेषं चापचन्द्रोऽथ पूर्वेन्दुस्तृतीये पदे तदा तच्चापं राशि षट्कयुतं सत् चापचन्द्रो भवत्यथ पूर्वेन्दुश्चतुर्थे पदे तदा तच्चापं चक्राद्विशुद्धं तच्चापचन्द्रो भवतीत्यर्थः। ततश्चापचन्द्रस्य क्रान्तिनिष्पन्नत्वात् सायनांशत्वमस्त्यतः पूर्वेन्दोः सायनांशाच्चक्रार्द्धचक्रकालिकचन्द्राच्चापेन्दोश्च यथायातचापचन्द्रात् द्वयोरपि विवरादन्तराद्यत् चन्द्रभुक्त्या आप्तं वासरादि फलं तेन कृत्वा पातकालो गतो ज्ञेयः! यदि चन्द्रात् पूर्वेन्दुरधिको भवेदूनं च तस्मिन्नेष्यः पातकाल इत्येतच्च कर्मासकृत्कार्यम्। वासरादिफलेन गतैष्यपातकालावगमे रविपातौ तात्कालिकौ विधाय रवेः सायनात् क्रान्तिं कृत्वा तच्चापचन्द्राद्विशोध्य विक्षेपं यथावस्थितात् क्रान्तिं च कृत्वा तां विक्षेपेण संस्कृत्य निरीक्षेदर्कापमसमा जाता नवेति। यदि क्रान्त्योः समत्वं तदा स पातमध्यकालोऽसाम्ये चापचन्द्रविक्षेपेण प्राग्वदर्कक्रान्तिं संस्कृत्य पुनश्चापचन्द्रः कार्यः। तस्मात्कालावगमस्तेन च पुनस्तात्कालिकीकरणमेवं तावद्यावत् कालः स्थिरो भवति। स पातकाल इत्यर्थः।

अत्र वासना। रविचन्द्रयोगस्य चक्रार्द्धकाले चक्रकाले वाऽप-मण्डलगतं तत्क्रान्त्योः साम्यं भवत्येव। केवलं तद्विक्षेपवशात् भिद्यते। यतो रविमण्डले चन्द्रस्ततो यदि चन्द्रक्रान्तौ विक्षेप ऋणं क्षतस्तदा तावतोपचिता सती चन्द्रक्रान्ती रविक्रान्त्या साम्य-मेष्यति। अतो यैव तदुपचिता रविक्रान्तिः सैव पातकालीनचन्द्र-स्याथ चन्द्रक्रान्तौ विक्षेपो धनं क्षतस्तदा तेनापचिता सती चन्द्रकान्ती रविक्रान्त्या साम्यमेष्यत्यतो यैव तदुपचिता रविक्रान्तिः सैव पातकालीनचन्द्रस्येति। तच्चापं च भुजस्तद्वशात्तात्कालिकश्चन्द्रो भवति। स च चक्रार्द्धचक्रकालिकचन्द्रात् यद्यूनस्तदाऽऽतीत एव पातो युज्यते। यतः पातकालिकचन्द्र उपचितः सन् चक्रार्द्धचक्र-कालीनसमो भविष्यत्यधिके तु पातकालिकचन्द्रे भविष्य एव पातो युज्यते। यतो यदा चक्रार्द्धचक्रकालिकचन्द्रस्तत्समो भविष्यति तदा क्रान्तिसमत्वमेष्यत्यतो भावी पात इति। यदा च व्यतिपाते क्रान्तिसाम्यमुत्पद्यते तदा चक्रार्द्धकाले रविचन्द्रयोः स्वक्रान्त्योर्विक्षेप-तुल्यमेवान्तरं भवति। पूर्वापरयाऽर्गलया रविचन्द्रयोस्त्वभिन्नदिक्के क्रान्ती भवतः। वैधृते चक्रकाले दक्षिणोत्तरयाऽर्गलयातयोः क्रान्ति-साम्यमुत्पद्यते। भिन्नगोलगयोरतस्तत्रापि भिन्नदिशोः क्रान्त्यो-र्यदन्तरं तदपि विक्षेपतुल्यमेवातश्चन्द्रविक्षेप एव क्रान्तिखण्डकेश्चापी-क्रते यावाँस्तावदेव चक्रार्द्धचक्रकालिकचन्द्रस्य चापचन्द्रस्य चान्तरम्। तेन च त्रैराशिकेन दिनादिफलानयनम्। यदि चन्द्रभुक्त्यैकं दिनं तदनेन चन्द्रद्वयान्तरेण कियदिति! रविपातयोरपि तात्कालिकी-करणे त्रैराशिकम्। यद्येकदिनेन भुक्तितुल्याः कलास्तदनेन दिना-दिना किमिति सर्वमुपपन्नम्।

अथ पातस्य मध्यकाले स्थिरीभूते आद्यन्तकालानयनाय तत्रैव श्लोकाः।

मध्यकाले रविक्रान्तिः प्राग्वद्विक्षेपसंस्कृता।
मानयोगदलेनादावूनाऽन्ते च युताऽसकृत्॥

चन्द्रे विषमपादस्थे व्यत्ययात्समपादगे ।
पूर्ववच्चापचन्द्रादिकालस्थित्यर्द्धवासराः ॥
तद्युतिः पातकालः स्याद्विवाहादिषु गर्हितः ।
स्नानदानादिकृत्येषु सदाऽक्षयफलप्रदः ॥

अयमर्थः। पातस्य मध्यकाले या रविक्रान्तिः सा प्राग्वत् चन्द्रक्रान्तिसंस्कारवैपरीत्येन विक्षेपेण संस्कृता पातस्यादावन्विष्यमाणे वक्ष्यमाण-ग्रहण धिकारोक्तविधिनाऽऽनीत-रविचंद्रविम्वमानैक्यार्द्धेनोना पातान्ते च साध्यमाने युता कार्या यदि पातकालिकचन्द्रो विषमपादे प्रथमे तृतीये वा भवेत्। समपादगे तु द्वितीयपादगे चतुर्थपादगे वा व्यत्ययाद्वैपरीत्यात्। आदावन्विष्यमाणे मानैक्यार्द्धेन युता कार्याऽन्ते चोनेति। यतो विषमपदे भुक्तात् क्रान्तिः साध्यते समपदे च भोग्या-दिति। ततस्तस्या विक्षेपमानैक्यार्द्धसंस्कृतरविक्रान्तेः पूर्ववच्चाप-चन्द्रस्तस्य पातकालीनचापचन्द्रस्य चान्तरात् चन्द्रभुक्त्या दिनादि-कालं समानीय तेनार्कं तात्कालिकीकृत्य तस्मात्सायनात् क्रान्तिं तात्कालिकपातेनायनांशहीनतात्कालिकचापचन्द्राद्विक्षेपस्तेन माने-क्यार्द्धेन चार्कक्रान्तिं संस्कृत्यासकृद्यः कालः स्थिरस्तत्पातस्य स्थित्यर्द्धं दिनादि आदावन्ते च पृथक् पृथक् भवति। यद्वा मानैक्यार्द्धं नवशत्या हत्वा चापचंद्रस्पष्टक्रान्तिखण्डकेन भजेत् लब्धं यत् फलं तत्वष्ट्या हत्वा चन्द्रभुक्त्या भजेल्लब्धं घटिकाद्यादिकालो भवे-दन्तकालोऽपि तावानेव। तथा च

यावत् क्रान्त्यन्तरं न्यूनं मानैक्यार्द्धात्समापमे ।
तावत्स पातकालः स्यान्मङ्गलानां विनाशकृत् ॥ इति ।

तयोश्चाद्यन्तस्थित्यर्द्धयोर्या युतिः स पातकालो विवाहादिषु माङ्गल्येषु निन्द्यः। स्नानादिकृत्येषु चाक्षयफलप्रद इति।

अत्र वासना। पातमध्यकाले समार्गलस्थे रविचन्द्रविम्बकेन्द्रे भवतस्ते अर्गलया सह प्रथमविम्बद्वयपरिधिसंपर्कात् प्रभृति

बिम्बमानयोगार्द्धोत्पन्नकालेन भवत:। तावतैव कालेन पुनस्तयो-र्बिम्बपरिध्योरंगलाविश्लेषस्तत्र याम्योत्तरमार्गेण यस्मानैक्यार्द्धतुल्यं रविचन्द्रयोः क्रान्त्यन्तरं तद्वशात् पाताद्यन्तकालौ कर्त्तुमुपपन्नौ। यतो याम्योत्तरैव क्रान्ति: समा तयोरन्विष्यते। भट्टोत्पलेन तु पूर्वापरेणैव भुक्त्यन्तरेणाद्यन्तकाल: साधितस्तथा च।

रविशशिमानैक्यार्द्धात् षष्टिगुणाद्गतिविशेषभक्ताद्यत्।
लब्धं स्थितिदलघटिका मध्यं हीनाढ्यमाद्यन्तौ॥

इति। तदत्र स एव जानाति।

अथ यथा क्रान्त्यो: समत्वं नोत्पद्यते तथा दर्शनाय तत्रैव श्लोक:।

विधोर्यदा परक्रान्तेर्भिन्नदिक्क: शरो भवेत्।
गुर्वी रवे: परक्रान्तिस्तदा साम्यं न जायते॥

विधोश्चन्द्रमसः परक्रान्तेर्मिथुनान्तगस्य धनुरन्तगसत्र वा शशिनोऽवश्यमेव क्रान्ति: परमा भवति। सा च दक्षिणेनोत्तरेण वा विक्षेपेणापचिता सती मिथुनान्तगाया धनुरन्तगाया वा यदि भिन्नदिशो विक्षेपो भवेत् रवे: परक्रान्तिर्मिथुनान्तगसत्र धनुरन्तगसत्र वा गुर्वी भवेत् तदा रविचन्द्रयोगे चक्रार्द्धचक्रतुल्ये सत्यपि क्रान्ते: समत्वं नोत्पद्यत इति।

अत्र वासना। मिथुनान्तगसत्र धनुरन्तगसत्र वा शशिनोऽवश्यमेव तत्क्रान्ति: परमा भवति। सा च दक्षिणेनोत्तरेण वा विक्षेपेणा-पचिता सती रविक्रान्तेरूना भवेत् तस्मात्प्रदेशाद्यथा यथा चन्द्रमा अग्रतो याति तथा तथा सुतरामूना भवत्यतस्तदा क्रान्तिसाम्याभाव उपपद्यते। यदा पुनरिन्दोस्तत्क्रान्तिर्विक्षेपेणाधिका सती रविक्रान्ते-रधिका भवति तदा चक्रार्द्धचक्रकालादर्वाक् परतश्च चन्द्रमसि शीघ्रत्वादवस्थिते वारद्वयं क्रान्तिसाम्यमुत्पद्यते। यदिह नामायन-भेदे यत् क्रान्तिसाम्यं तद्व्यतिपातं दृश्यते यच्च गोलभेदे तद्वैधृत इति।

अथ यदा क्रान्तिसाम्यसंभवोऽन्वेष्यस्तत्प्रतिपादनाय तत्रैव श्लोकः।

सार्द्धेषु पञ्चसु भवेद्व्यतिपातस्य संभवः।
गण्डोत्तरार्द्धात् शुक्लादेर्वैधृतस्य परेषु न॥

विष्कम्भादिषु गण्डाख्ययोगस्य द्वितीयार्द्धात् प्रभृति सार्द्धेषु पञ्चसु योगेषु वज्रं यावद्व्यतिपाताख्यपातस्य सम्भवो ज्ञेयः। तथा शुक्लाख्ययोगस्यादेः प्रभृति सार्द्धेषु पञ्चसु योगेषु प्रीत्याद्यर्द्धावधि वैधृताख्यपातस्य सम्भवः। परेषु अन्येषु योगेषु न व्यतीपातस्य नापि वैधृतस्य सम्भवो रविचन्द्रयोगस्य चक्रार्द्धचक्रतुल्यत्वाभावादित्यर्थः॥

अथ सावनवर्षाधिपानयनम्। तत्र भट्टोत्पलः।

शश्यश्विभव११२१ विहीनाद् द्युगणात् खर्त्वग्नि३६०भाजितादाप्तम्।
त्रिघ्नं सप्तविभक्तं सावनवर्षाधिपोऽर्कादिः॥१॥

अस्यार्थः। इष्टदिनादहर्गणात् शश्यश्विभवैरेकविंशत्यधिकैकादशशतै रहितात् खर्त्वग्निभिः षष्ठ्यधिकशतत्रयेण भक्तात्लब्धं तत् त्रिगुणितं सत् सप्तभिर्भजेत् लब्धेन प्रयोजनं नास्ति। यतः शेषे भोग्योऽर्कादिः सावनवर्षाधिपतिर्भवति। खर्त्वग्निभक्ताच्च यदवशेषं तानि वर्त्तमानवर्षाधिपस्य गतानि दिनानि भवन्ति। तानि च भाजकाच्छुद्धानि तस्य च गम्यानि भवन्ति॥

अत्र वासना। भूगोलस्तावच्चन्द्रादिग्रहकक्षाभिः स्वस्वप्रदेशनियताभिर्वेष्टितोऽस्ति। तथा च ब्रह्मसिद्धान्ते—

शशिबुधसितार्ककुजगुरुशनिकक्षावेष्टितो भकक्षान्तः।
भूगोलः सत्वानां शुभाशुभैः कर्मभिरुपात्तः॥

इति। ग्रहाश्च रव्यादयः स्वाधोऽधःस्थिता यथाक्रमं स्वस्ववारप्रवृत्तिकालादारभ्य सार्द्धघटिकाद्वयप्रमाणं कालमहोरात्रस्याधितिष्ठन्ति। स च कालहोरेति पूर्वाचार्यैः सङ्केतितः। तदधिष्ठानवशेन च सावनवर्षमासदिनानामधिपतयो भवन्ति। अहोरात्रे च चतुर्विंशतिः कालहोरास्तासु सप्तभिरपवर्त्तितासु त्रयोऽवशिष्यन्ते।

अतश्चतुर्थी चतुर्थी कालहोरा दिनादौ दिनादौ भवत्यधः स्थितत्वाच्च रवेश्चतुर्थी चन्द्रस्य। चन्द्राच्चतुर्थी भौमस्य। भौमाद्बुधस्य। बुधाद्गुरोः। गुरोः शुक्रस्य। शुक्राच्छनेरित्ययमेव दिनवारादौ क्रमःसिद्धः। सावनवर्षप्रमाणे च षष्ट्यधिकशतत्रयं दिनानि तेषु चतुर्विंशतिहतेषु सप्तभक्तावशिष्टं द्विकमतस्तृतीया तृतीया कालहोरा वर्षादौ वर्षादौ भवति। तृतीया च रवेर्बुधस्य स च रव्यादिगणनायां चतुर्थोऽतः प्रतिवर्षं त्रयो गुणकः सिद्धः। अथ शोधनकोत्पत्तिः। अत्र चाहर्गणे षष्टिशतत्रयभक्ते पुनः सप्तभिरित्यतो भागहारद्वयघातेन विंशत्यधिकपञ्चविंशतिशतैः २५२० करणादिजकल्पगताहर्गणे खनागकरधृतिवसुशररविरसवियदश्विनगसङ्ख्ये ७२०६३५८१८२८० भक्ते चतुर्दशशतान्यवशिष्यन्ते १४००। तानि च स्वभाजकात् शुद्धावशेषाणि वियदश्विभवाः ११२० शोधनकः संजात इति। करणादौ च रविवारोऽस्तीत्यतो वियदश्विभवविहीनादिति पाठ उपपन्नोऽर्द्धरात्रिकत्वापेक्षयातु भट्टोत्पलेन शश्यश्वीतिकृतम्॥

अथ सावनमासाधिपानयनं भट्टोत्पलस्यैव।
शशिमुनि७१हीनात्त्रिंश३०द्विभाजितात् फलमहर्गणाद्द्विगुणम्।
सप्तविभक्ताच्छेषं सावनमासाधिपोऽर्कादिः॥२॥

अस्यार्थः। इष्टाहर्गणादेकसप्तत्या रहितात् त्रिंशद्भक्ताच्च यत् फलं तद्द्वाभ्यां गुणितं सप्तभक्तावशेषं वाऽर्कादिभोग्यः सावनमासाधिपो भवति। त्रिंशद्भक्तावशेषाच्च यद्गतानि तस्मात् त्रिंशच्छुद्धावशेषाण्यन्यानि च दिनानि भवन्ति।

अत्र वासना। अहोरात्रे चतुर्विंशतिः कालहोराः सावनमासे च त्रिंशद्दिनानि। तेषु चतुर्विंशतिहतेषु सप्तहृतावशेषः षट्कोऽतः सप्तमो सप्तमो कालहोरा मासादौ मासादौ भवति। सा च रविप्रभृतिगणनायां सप्तमो कुजस्य स च वारगणनायां रवेस्तृतीय इत्यहर्गणात् त्रिंशता लब्धं द्वाभ्यां हन्यत इति। अथ शोधकोत्पत्तिः।

तत्राहर्गणः पूर्वं त्रिंशता भाज्यस्तत्फलं सप्तभिरतो भाजकद्वयघातेन दिग्यमैः २१० करणादिजकल्पाद्यहर्गणे * भक्ते चत्वारिंशदधिकं शत-मवशिष्यते । अतस्तद्भाजकाद्विशोध्य खमुनयः शोधकोऽतोऽत्रापि खमुनिविहीनादितिपाठ उचितोऽर्द्धरात्रिकल्पापेक्षया तु शशिमुनी-त्युक्तम् । तथाच ब्रह्मसिद्धान्ते ।

> त्रिचतुरनन्तरषष्ठाः सावनमासाब्ददिवसहोरेशाः ।
> अर्कोनलग्नहोराः पञ्चगुणाः सविकला यदि सरूपाः ॥
> दिनगतघटिका द्विगुणाः पञ्चहृता वाऽन्यमतमेतत् । इति ।

वारप्रवृत्तिश्चोत्तरश्लोकेन यथा ।

> दिनार्द्धे तिथितो न्यूने प्रागूर्द्ध्वमधिके भवेत् ।
> वारः सूर्योदयात्पश्चात्प्रागूर्द्ध्वं मध्यतोऽन्यतः ॥

अस्यार्थः । यस्मिन्दिने यस्मिन् देशे यावता कालेन पञ्चदशभ्यो घटिकाभ्यो हीनं दिनार्द्धं भवति तस्मिन् दिने तस्मिन् देशे तावता कालेन सूर्योदयात्प्राक् प्रथमं वारप्रवृत्तिः । यत्र च दिने यावता कालेन पञ्चदशभ्योऽधिकं दिनार्द्धं भवति तत्र दिने तावता कालेन सूर्योदयादूर्ध्वमनन्तरं वारप्रवृत्तिः । एतच्चरदलोत्थमन्तरम् । तथा मध्यतो मध्यादुज्जयिनीयाम्योत्तररेखातः पश्चाद्वासिनां सूर्योदयात् प्राक् प्रथमं वारप्रवृत्तिः । अन्यतः प्राग्वासिनां सूर्योदयात् ऊर्ध्व-मनन्तरं इति । लङ्कासूर्योदये हि सर्वत्रैव वारप्रवृत्तिरिति पूर्व-सूरयोऽन्यत्र चरदलाद्देशान्तराच्च । तत्र चरानयनं त्रिप्रश्नाधिकारे वक्ष्यति । तच्च दिनार्द्धस्य तिथितो न्यूनाधिक्ये भवति । देशान्तरं तु रेखादेशात्स्वदेशस्य योजनात्मकं यत्पूर्वापरमन्तरं तेन त्रैरा-शिकेनोत्पाद्यम् । यदि खखाष्टवेदैः ४८०० स्पष्टभूपरिधियोजनैः षष्टिर्घटिकास्तत्स्वदेशरेखादेशान्तरयोजनैः कियत्य इति । लब्धं

* खनागकरधृतिवसुशरत्रिरसवियदश्विनगसंख्ये ७२०६३५८१८२८० ।

देशान्तरकालः । एतच्च फलद्वयमपि यदा प्राग्भवं पश्चाद्भवं वा तदा तयोर्योगेन वारो ज्ञेयो भेदेतु तदन्तरेण शेषवशादिति । इति पण्डित महादेवात्मज—आमशर्मविरचिते खण्डखाद्यकवासना-भाष्ये तिथ्यधिकारः प्रथमः ॥१॥

अथ ग्रहाधिकारो व्याख्यायते । तत्रादावेव चन्द्रस्य विक्षेपोपयोगित्वाच्चन्द्रपातानयनमाह ।

द्व्यगगुण३७२हीनात् द्युगणा-
ल्लब्धं भगणादि शरनवागरसैः ६७९५ ।
षड्विषुरसाब्धीन्दुशरैः ५१४६५६
सांशं चक्राच्च्युतं पातः ॥१॥

द्युगणात् प्रागानीतात् अर्द्धरात्रिकाहर्गणात् द्व्यगगुणैः द्विसप्तत्यधिकशतत्रयेण हीनात् शरनवागरसैः पञ्चोनाष्टषष्टिशतैर्भागे हृते यल्लब्धं भगणादि फलं तत्पुनरहर्गणात् षड्विषुरसाब्धीन्दुशरैर्भागे हृते यल्लब्धं अंशादि फलं तेन सहितं कार्यम् । तत इन्दूच्चचन्द्रपातावूनौ शरदिग्विलिप्ताभिरित्युत्तरवचनात् दशविकलाहीनं सत् चक्रात् राशिद्वादशकात् च्युतं शोधितं कार्यम् । शेषं राश्यादिकोऽर्द्धरात्रिकश्चन्द्रस्य विलोमपातो भवति ।

अत्र वासना । चतुर्युगे चन्द्रपातभगणाः २३२२२६ तथा च शिष्यधीवृद्धिदतन्त्रे । पातस्य षड्द्वियमदन्तयमा विलोमाः । एभिस्त्रैराशिकम् । यदि युगभगणैस्त्रिशतीयुतभूदिनानि लभ्यन्ते तदैकेन भगणेन किमिति लब्धमल्पाधिकतया शरनवागरसाः ६७९५ एतैर्युगभूदिनेषु भक्तेषु लब्धं भगणादि २३२२१।७।५।२४।२ एतत्पातभगणेभ्यो विशोध्य शेषं भगणादि ८।६।५।५८ एतल्लिप्तीकृतम् १८३९५८ अनेन षष्टिगुणितकुदिनेभ्यो भागे हृते लब्धं

प्रतिभाजकः षड्विषुरसाब्धीन्दुशराः ५१४६५६ अत्र प्रथमभगणादि-फलाय योऽहर्गणभाजकस्तस्य किञ्चिदधिकत्वात् तेन हीनो ग्रह उत्पद्यते। अतः प्रतिभाजकलब्धांशादिफलेनाधिकः क्रियते। अथ शोधकोत्पत्तिः। तत्र करणादौ कलिगताहर्गणः १३७५५६५ शरनवागरसभक्तः शेषम् २९७५ कलियुगाद्यागतपाते च चक्रार्द्धं क्षेप्यम्। तथा च शिष्यधीवृद्धिदतन्त्रे। तमः सषड्भं भगणादि-शोधयेदिति। तस्माद्भाजकार्द्धे ३३९७ क्षिप्ते भगणार्द्धक्षेपो जायते तथा कृते जातम् ६३७२ पुनरहर्गणात् षड्विषुरसाब्धीन्दुशरैर्लब्ध-मंशादि २।४० एतत् शरनवागरसगुणितं त्रिंशता भक्तं राशयो द्वादशहृतं च भगणशेषम् ५०।१।२ एतत्पूर्वराशौ क्षिप्तं जातम् ६४२३ * अयं क्षेपः प्राग्भाजकात् ६७९५ शोधितः शेषं द्व्यगगुणाः ३७२ शोधक इत्युपपन्नम्॥

अथोत्तराध्यायोक्तप्रकारेण पातानयनमार्ययाह।

सार्द्धकृतेषुगुणोना ३५४-
दहर्गणात् द्विनवमुनिरसै६७९२र्भक्तात्।
यन्मण्डलादि लब्धं
चक्रात्संशोध्य तत्पातः ॥२॥

अहर्गणात् सार्द्धकृतेषुगुणैरर्द्धसहितचतुःपञ्चाशदधिकशतत्रयेणोनात् द्विनवमुनिरसैरष्टोनाष्टषष्टिशतैर्भक्तात् यन्मण्डलादि भगणादि फलं लब्धं तच्चक्रात्संशोध्य शेषं च पातो भवति। अत्र शेषोपेक्षणादस्य

---

* क्षेपसंख्याया भाजकसमत्वे आगतभगणसंख्या एकाधिका भवितुमर्हतीति क्षेपसंख्यायां भाजकतः शुद्धायां तावद्भिर्दिनैर्ग्रन्थारम्भानन्तरं भगणपूर्त्तिरिति भगणप्रयोजनाभावात् एताः संख्या अहर्गणत एव शोधितास्तथा कृते भगणारम्भाद्राश्याद्यागमिष्यति।

पूर्वेण सह यदन्तरं तद्बीजफलेन भच्यते । बीजसंस्कारे कृते सति प्रकारद्वयेनापि सदृश एव पातो भवतीति ।

अत्र वासना । अनुपातेन पातस्य वर्षभुक्तिः साध्यते । यदि खचतुष्टयरदवेदैः सौरैरुक्तपातभगणा लभ्यन्ते तदेकेन सौरेण किमिति । लब्धं भगणादि ०।०।१८।२१।८ एतद्विकलीकृतम् ६८६६८ ततो व्यस्तत्रैराशिकम् । यद्येताभिर्विकलाभिः शरनवागरसा भवन्ति तद्बीजविकलाभिस्त्रिंशता हीनाभिरेताभिः किमिति । अत्र त्रैराशिकस्य व्यस्तत्वात् आद्येन शरनवागरसा गुणितास्तेनैव त्रिंशता हीनेन ६८६३८ भक्ताः फलं द्विनवमुनिरसा भाजकः । अथ शोधकोत्पत्तिः । तत्र शरनगार्णवशककालाद्बीजप्रवृत्तिः । अतः खण्डखाद्यकादिशाकात् ५८७ उक्तशककाले ४७५ शोधितेऽन्तरं ११२ पातस्य प्रत्यब्दमर्द्धकलाक्षेपोऽतोऽर्द्धितम् ५६ एताः कला व्यस्तक्रियया द्विनवमुनिरसगुणितास्वक्रकलाभक्ताः फलम् १०।३० एता धनात्मका अतो द्व्यगगुणेभ्यः शोधिता जाताः सार्द्धकृतेषुगुणाः शोधक इति । अत्र प्रागानयनोक्तं दिग्विलिप्ताहीनं च कार्यमिति ।

अथ भौमानयनमाह ।

पादोनरसनवोदधि४९६-
हीनाद्गणाद्यहर्गणाद्भौमः ।
सप्ताष्टरसैः ६८७ सकलो
नवतत्त्वाब्धिस्वरशशाङ्कैः १७४२५९ ॥३॥

पादेनोनाः पादोनास्ते च ते रसाश्च पादोनरसाश्च नव च उदधयश्च पादोनरसनवोदधयस्तैः सपादचतुरूनपञ्चशतैर्हीनादहर्गणात् सप्ताष्टरसैः सप्ताशीत्यधिकषट्शतैर्यत् भगणादि फलं स भौमो भवति । किं विशिष्टः सन् नवतत्त्वाब्धिस्वरशशाङ्कैरहर्गणाद्यल्लब्धं कलादि तेन सहितः कार्यः । अयमर्थः । अहर्गणं पादोनरसनवोदधिहीनं

कृत्वा सप्ताष्टरसैर्भजेल्लब्धं भगणादि फलं तदहर्गणान्नवतत्त्वाब्धिस्वर-शशाङ्कैर्लब्धकलादिफलेन युक्तमर्द्धरात्रिको भौमो भवति ।

अत्र वासना । कुजस्य युगभगणाः २२९६८२४ तथा च शिष्य-धीवृद्धिदतन्त्रे । भौमस्य संकृतिगजाङ्गनवाश्विदस्रा इति । त्रै-राशिकम् । यदि युगभगणैस्त्रिशतीयुतभूदिनानि भवन्ति तदैकेन किमिति । लब्धं किञ्चिदूनाः सप्ताष्टरसाः । अमीभिस्त्रि-शतीयुतकुदिनेभ्यो भागे हृते लब्धं फलं भगणादि २२९६८२३।६।२९।५ एतस्य पठितभगणानां चान्तरं जातं भगणादि ०।५।०।५५ एत-ल्लिप्तीकृतम् ९०५५ एतेन भूदिनेभ्यो लब्धं प्रतिभाजको नवतत्त्वाब्धि-स्वरशशाङ्काः ! अथ शोधकोत्पत्तिः । तत्र करणादौ कलि-गताद्दहर्गणे सप्ताष्टरसभक्ते शेषम् १९१ एतत् सप्ताष्टरसेभ्यो विशोध्य शेषम् ४९६ शोधकः । पुनरहर्गणान्नवतत्त्वाब्धिस्वरशशाङ्कात्फलं लिप्ता ८ एता विपरीतकर्मणा सप्ताष्टरसगुणा जाताः ५४९६ षष्ट्या हृताः फलम् ९१ अस्मात् त्रिंशता राशयः ३ राशित्रयं च भगण-पादोऽनेन हीनः शोधकः ४९५।४५ इत्युपपन्नम् ।

अथ बुधशीघ्रोच्चानयनमाह ।

बुधशीघ्रं शत१००गुणितात्-
द्युगणाद्भगणादि शशिधृतियमैर२१८१नात् ।
सप्तनवस्वरवसुभिः ८७९७
कृतखमनुनगैः ७१४०४ कलाभ्यधिकम् ॥४॥

अहर्गणात् शतगुणितात् शशिधृतियमैरेकाशीत्यधिकैकविंशति-शतैरूनात् सप्तनवस्वरवसुभिस्त्रूनाष्टाशीतिशतैर्भक्ताद्यत् भगणादि-फलं तदहर्गणात् कृतखमनुनगैश्चतुरधिकचतुःशतोपेतैकसप्ततिसहस्रै-र्भागे हृते लब्धं यत्कलादि फलं तेनाधिकं सत् बुधस्य शीघ्रोच्चं भवति ।

अत्र वासना। चतुर्युगे बुधशीघ्रोच्चभगणाः १७९३७०२० तथा च शिष्यधीवृद्धिदतन्त्रे।

प्रालेयरश्मितनयस्य चलोच्चचक्रा-
ण्यभ्राच्चिखाद्रिगुणनन्दतुरङ्गचन्द्राः।

इति। विंशतिं त्वस्य शोधयेदिति पौलिशवचनादर्धैराशिकरणे विंशतिभगणविशुद्धो बुधशीघ्रभगणः १७९३७००० एतैस्त्रैराशिकम्। यदि त्रिंशतीयुतयुगभूदिनैर्युगभगणा एते लभ्यन्ते तदाऽहर्गणेन किमिति। अत्रासन्नापवर्त्तकेन १७९३७० अपवर्त्तितयोर्भाज्यभाजकराश्योर्भाज्यस्थाने शतं भाजकस्थाने च सप्तनवस्वरवसव इति। शताहतकुदिनेभ्यो भाजकभक्तेभ्यः फलं भगणादि १७९३६९९८।११।२१।४१ एतद्भगणेभ्यः संशोध्य शेषं भगणादि १।०।८।१९ एतल्लिप्तीकृतम् २२०९९ अनेन कुदिनेभ्यो भागे हृते लब्धं प्रतिच्छेदः शतखमनुनगाः ७१४०४। अथ शोधकोत्पत्तिः। करणादिकलिगताहर्गणः शतगुणितो भाजकभक्तस्य शेषम् ६६०८ पुनरहर्गणः शतखमनुनगभक्तः फलं लिप्ताः १९।१५ अनेन वैपरीत्यकरणेन सप्तनवस्वरवसवो गुणिताः १६९३४२ षष्ट्या हृते लब्धं २८२२ अस्मिन् * त्रिंशद्भक्ते लब्धं ९४ अतो द्वादशभिरर्द्धाधिकतया लब्धं ८ एतत्प्राक्शेषे ६६०८ भगणशेषावयवत्वाद्युतम् ६६१६ शोधनके क्रियमाणे सप्तनवस्वरवसुभ्यः शुद्धं जाताः शशिधृतियमा इति।

अथ गुर्वानयनमाह।

**पञ्चांशोनगुणो श-**
**हूना२११३ द्युगणाद्रदलिप्त४३३२लब्धम्।**
**भगणादिगुरुः शशियम-**
**रसयमषोड़श१६२६२१भिरंशोनम्॥५॥**

---

* मूलपुस्तकेऽवत्या अङ्काः सर्वे अशुद्धा एव।

अहर्गणात् पञ्चांशोनगुणिशद्रनात् पञ्चांशेन ऊनास्ते च ते गुणाश्च पञ्चांशोनगुणाः पञ्चांशोनगुणाश्च ईशाश्च द्वौ च पञ्चांशोनगुणिशद्वयः। तैरूनात् रदत्रिकृतैर्द्वात्रिंशदधिकत्रिचत्वारिंशच्छतैर्भागे हृते लब्धं यद्भगणादि फलं स गुरुर्भवति। पुनरहर्गणात् शशियमरसयमषोड़शभि * द्विषष्टिसहस्राधिकलक्षेण एकविंशत्यधिकषट्शतैश्च भागे हृते यल्लब्धमंशादि फलं तेन हीनः कार्य इति।

अत्र वासना। गुरुयुगभगणाः ३६४२२४ तथा च शिष्यधीवृद्धिदतन्त्रे। जीवस्य सागरयमाश्विकृगाङ्गरामा इति। अर्द्धराविककरणाय गुरुभगणाश्चतुर्विहीनाः ३६४२२० एतैर्भक्तेभ्यः कुदिनेभ्यः फलं रदत्रिकृताः किञ्चिदधिकाः। अयं गुरोर्हारोऽनेन भक्तेभ्यः कुदिनेभ्यः फलं भगणादि ३६४२४६।११।१३।३ एतच्चतुरूनगुरुभगणेन हीनं भगणादि २६।११।१३।३ एतदंशीकृतम् ८७०३ अनेन हृतकुदिनेभ्यः फलं प्रतिच्छेदः शशियमरसयमषोड़शसङ्ख्योऽत्र भाजकस्योनत्वात्प्रतिभाजकलब्धभागादिफलेन हीनो गुरुः कार्य इति। अथ शोधकोत्पत्तिः। करणादिजकलिगताहर्गणो रदत्रिकृतभक्तः शेषम् २३२१ पुनरहर्गणाच्छशियमरसयमषोडशभिरंशादि फलम् ८।२७।३१ एतद्वैपरीत्येन रदत्रिकृतैर्गुणितं षष्ट्यासमुपर्युपरि संयोज्य जातम् ३६६४२ अस्मात्त्रिंशता लब्धम् १२२१।१२।३० अस्माद्द्वादशभिर्लब्धं भगणशेषत्वमापन्नम् १०१।९।१२ एतत् प्राग्भगणशेषात् २३२१ शोधितम् २२१९।२।१८ शोधनकत्वेऽभिमते रदत्रिकृतेभ्यः-शुद्धमर्द्धाधिकतया जाताः पञ्चांशोनगुणिशद्वय इति।

अथ शुक्रशीघ्रोच्चानयनमाह।

पादयुतागगुणो३७नात्
दश१०गुणितान्मण्डलादि सितशीघ्रम्।

---

मूल पुस्तके द्वाषष्टिलक्षेण एकविंशत्यधिकशतैश्च इति पाठोऽस्ति।

मुनिजिनयमलैः २२४७ सांशं
व्यर्कनगा७१२त्रिकृतखनगाग्नैः ७७०४३ ॥६॥

अहर्गणात् पादयुतागगुणोनात् पादेन चतुर्थभागेन युतास्तेच ते अगाश्च पादयुतागास्ते च गुणाश्च तैः सपादसप्तत्रिंशता ऊनादेवं विधाद्दशभिर्गुणितात् मुनिजिनयमलैः सप्तचत्वारिंशदधिकद्वाविंशतिशतेन भक्ताद्भगणादिफलं तत्पुनरहर्गणात् व्यर्कनगाः विगता अर्कनगा यस्मात्तस्मात् द्वादशाधिकसप्तशतैरूनात् त्रिकृतखनगाग्नैस्त्रिचत्वारिंशदधिकसप्तसप्ततिसहस्रैर्भक्तात् यदंशादि फलं तेन सहितं सितस्य शीघ्रोच्चं भवति। अस्माच्च वक्ष्यमाणोत्तरोक्त्या कृतमुनयो लिप्ताः शोध्या एतच्च ग्रन्थकृदहमहमिकामात्रम्। न तु चित्तचमत्कारिणी काऽपि युक्तिरवगम्यते। के चित्तु।

भानोः फलेन परमेण दलीकृतेन
स्पष्टो भृगुर्विरहितोऽतिपरिस्फुटः स्यात् ॥

इति श्रिष्यधीवृद्धिदवचनात् शुक्रशीघ्रफलस्यैव संस्कारमाहुस्तन्न। लल्लोत्पलभाष्ययोः शीघ्रोच्चस्यैव संस्कारस्याभिहितत्वात्। केचित्तु सितशीघ्रादित्याद्यार्या ब्रह्मगुप्तकृतैव न भवत्ययुक्तत्वादित्याहुस्तदत्राभियुक्तास्तद्विद एव प्रमाणमिति।

अत्र वासना। सितशीघ्रोच्चस्य युगभगणाः ७०२२३८८ तथा च श्रिष्यधीवृद्धिदतन्त्रे !

वस्वष्टरामयमनेत्रवियत्तुरङ्गाः
शीघ्रोच्चपर्ययमितिर्भृगुनन्दनस्य ।

इति। तैस्त्रैराशिकेन दशानामिष्टभगणानां सावनाः साध्यन्ते। यदि युगभगणैस्त्रिशतीयुतभूदिनानि लभ्यन्ते तदा दशभिः किमिति। फलं किञ्चिदूना मुनिजिनयमलास्तैर्दशगुणितभूदिनेभ्यो भागे हृते

लब्धं भगणादि फलम् ७०२२३३१।१।८ एतद्भगणेभ्यः शुद्धं शेषम् ५६।१०।२१ एतेनांशीकृतेन २०४८१ भक्ताभूदिनेभ्यो लब्धं त्रिकृत-खनगागाः ७७०४३ प्रतिभाजकः। अथ शोधकोत्पत्तिः। करणा-दिजकलिगताहर्गणो दशगुणितो मुनिजिनयमलभक्तो भगणशेषम् १७६३ पुनरहर्गणात् त्रिकृतखनगागैरंशादि तत्पराल्तम् १७।५१।१६।१४ वैपरीत्येन मुनिजिनयमलगुणितं षष्ट्या चोपर्युपरि संयोजितम् ४०११८ अस्मात् त्रिंशता लब्धं राशयः १३३७ अस्मात् द्वादशभिर्भगणशेषात्मक-१११।५।८ मनेन भगणशेषं युतम् १८७४।५।८ एतत् शोधनकत्वात् मुनिजिनयमलेभ्यः शुद्धम् ३७२।६।२१ एतद्दशभक्तं लब्धम् ३७ शेषम् २।६।२० एतद्भाजकस्य पादात्मकतया स्थापितम्। यद्वा पाद-युतागगुणा एते दशगुणा ३७२ जाताः किञ्चिदधिकाः। एते द्वादश-गुणिता मुनिजिनयमलभक्ताः फलं राश्यादि तत्परान्तं १।२८।४०। ४६।४२ भगणशेषादनेनैव भाजकेन राश्यादि फलं ८।१२।२७।२२।४८ तथा त्रिकृतखनगागैरंशादि तत्परान्तं यत्प्रागानीतं अनयोर्योगे जातम् १०।०।१८।४० एतत् भगणाच्छुद्धं जातम् १।२८।४१।१८।५८ एतस्मा-न्मुनि जिनयमलफलं राश्यादि शोधितं शेषं विकलादि ३३।१६ अनेन विपरीतकर्मणा त्रिकृतखनागाः द्विःस्थापिता गुणिताः षष्ट्या लब्ध-मुपरि संयोज्य जाता लिप्ताः ४२७१६ आभ्यः षष्ट्यांऽशा अर्कनगाः ७१२ परमार्थतस्त्वष्टिनगा उत्पद्यन्ते। आचार्येण त्वर्कनगा एवोप-निबद्धा इति।

अथ शनेरानयनमाह।

साब्धेन्दुनवजिनो२४९१नात्
भगणादिशनिः षड्त्वगखचन्द्रैः १०७६६ ।
खशराब्धिशून्यवसुभि८०४५०-
र्लिप्तानोऽङ्गारकादीनाम् ॥७॥

अहर्गणात् सार्द्धेन्दुनवजिनोनात् सहार्द्धेन वर्त्तत इति सार्द्धः स चासाविन्दुश्च सार्द्धेन्दुः स च नव च जिनाश्च तैरूनात् षड्‌त्वगखचन्द्रैः षट्षष्ट्यपेतसप्तशताधिकदशसहस्रैर्भागे हृते लब्धं यद्भगणादि फलं स शनिर्भवति। स चाहर्गणात् खशराब्धिशून्यवसुभिर्भागे हृते लब्धा या लिप्तास्ताभिरूनः कार्यः। अङ्गारकादीनामित्युत्तरत्र सम्भविष्यतीति।

अत्र वासना। शनेर्युगभगणाः १४६५६४ तथा च शिष्यधीवृद्धिदतन्त्रे। मन्दस्य सागररसेषुरसाब्धिचन्द्रा इति। एतैस्त्रैराशिकम्। यदि युगभगणैस्त्रिशतीयुतयुगभूदिनानि लभ्यन्ते तदैकेन किमिति लब्धं किञ्चिदधिकाः षड्‌त्वगखचन्द्रा भाजकः। एतैः कुदिनेभ्यो भागे हृते लब्धं भगणादि फलम् १४६५६४।१०।२६।५४ एतत् शनिभगणैरूनितं शेषं राश्यादि १०।२६।५४ लिप्तीकृतम् १९६१४ एतेन भक्तभूदिनेभ्यः फलं खशराब्धिशून्यवसवः ८०४५० प्रतिभाजकः।

अथ शोधनकोत्पत्तिः। तत्र करणादिजकलिगताहर्गणात् षड्‌त्वगखचन्द्रैर्भागे हृते भगणशेषम् ८२८३ पुनरहर्गणात् खशराब्धिशून्यवसुभिः फलं लिप्ताः १७।५ एतद्व्यस्तकर्मणा षड्‌त्वगखचन्द्रैर्गुणितं भगणकलाभक्तं लब्धम् ८।३० छेदकस्याधिकत्वादेतेन शेषमूनं क्रियते जातम् ८२७४।३० शोधकोऽभीप्सित इति षड्‌त्वगखचन्द्रेभ्यः शुद्धं जाताः सार्द्धेन्दुनवजिना इति।

अथैषां ग्रहाणामार्द्धरात्रिकाणां करणादौ धनर्णरूपमुत्तरोक्तं संस्कारमाह।

तिसृभिः ३ शनिर्त्रृंशीघ्रं
द्वाविंशत्या२२ कुजोऽधिको द्वाभ्याम् २ ।
चतसृभि४रधिको जीवोऽ-
र्द्धरात्रिकार्यभटमध्यसमाः ।८॥

अत्र प्राक्सूत्रात् इन्दूच्चचन्द्रपातावूनौ शरदिग्विलिप्ताभिरित्यतो विलिप्ताभिरून इत्यनुवर्त्तते । तदयमर्थः । अहर्गणाद्यः शनिः समागतः स तिसृभिर्विलिप्ताभिरूनः कार्यः । बुधशीघ्रोच्चं विलिप्ता-द्वाविंशत्योनं कार्यम् । कुजस्तु द्वाभ्यां विलिप्ताभ्यामधिकः कार्यः । जीवस्तु तिसृभिर्विलिप्ताभिरधिकः कार्यः । एवं संस्कारे कृतेऽर्द्धरात्रि-कार्यभटतन्त्रोक्तमध्यमानां ग्रहाणां समा ग्रहा भवन्ति । करणादा-वेतत् शोध्यं क्षेप्यं चासीदित्यर्थः । एते चार्द्धरात्रिका उक्तविधिना बीजयातभुक्तिभागदेशान्तरभुजान्तरवक्ष्यमाणचरान्तरसंस्कृताः[1] स्पष्टी-करणयोग्या भवन्ति । तदत्रोत्तरे श्लोकः ।

बीजयातं भुक्तिभागं देशान्तरभुजान्तरम् ।
चरान्तरं भुजफलं संस्कुर्यान्मध्यमे स्फुटम् ॥

अत्र बीजयातभुक्तिभागभुजान्तरभुजफलाख्याः पञ्च संस्कारा निरक्षजा देशान्तरचरान्तरे तु साक्षजे इति ।

अथ भौमादीनां मन्दोच्चप्रतिपादनायार्यार्द्धमाह ।

## मन्दांशा दशगुणिता
## रुद्रा११ द्वियमा२२श्च षोड़शा१६ष्ट८ जिनाः २४ ।

प्राक्सूत्रादङ्गारकादीनामित्यत्र सम्बध्यते । तदयमर्थः । भौमा-दीनां पञ्चानां यथासङ्ख्यं रुद्रादयो दशगुणिता मन्दोच्चानामंशा भवन्ति । तत्र रुद्रा एकादश दशगुणिता दशाधिकशतमंशा भौमस्य मन्दोच्चम् ११० । द्वियमा द्वाविंशतिर्दशगुणिता विंशत्यधिकशतद्वयं बुधस्य मन्दोच्चांशाः २२० । षोड़श दशगुणिताः षष्ट्यधिकशतमंशा गुरोर्मन्दोच्चम् १६० । अष्ट दशगुणा अशीतिरंशाः सितस्य मन्दोच्चम् ८० । जिनाश्चतुर्विंशतिर्दशगुणाश्चत्वारिंशदधिकशतद्वयं शनेर्मन्दोच्चांशा २४० इति । अतिमन्दगतित्वादेतानि करणादिकालीनान्येवोप-निबद्धानि ।

अथार्यभटोक्तस्पष्टीकरणस्य दोषख्यापनपूर्वकं स्वमतेन भौमजीवयोर्मन्दोच्चस्य शुक्रशीघ्रोच्चस्य शनिमन्दफलस्य बुधशीघ्रफलस्य चोत्तरसंस्कारमार्याद्वयमाह ।

न स्फुटमार्यभटोक्तं स्पष्टीकरणं यतस्ततो वच्ये ॥९॥
सप्तदशांशैरधिकं भौमस्योच्चं गुरोर्दशभिः ।
सितशीघ्रात्कृतमुनयो लिप्ताः शोध्याः शनेः फलं-
मान्दम् ॥१०॥
पञ्चांशोनं शीघ्रं षोडशभागाधिकं ज्ञस्य ।

आर्यभटोक्तं स्पष्टीकरणं न स्फुटं दृग्गणितैक्यकारि यतस्ततो हेतोः स्पष्टीकरणं दृग्गणितैक्यार्थविशेषं वच्ये । तद्यथा । भौममन्दोच्चं सप्तदशभिरंशैरधिकं कार्यम् । तच्च दशाधिकं शतमंशाः प्रागुक्तास्तत्सप्तदशांशैरधिकं जातम् ४।७ गुरोस्तूच्चं दशभिरंशैरधिकं जातम् ५।२० तद्भगणानामधिकत्वादिति । सितशीघ्रादित्याद्यार्यार्थं यथास्थानं प्रतिपादयिष्यति ।

अथैषां ग्रहाणां मन्दफलस्यातिदेशं तथा तिथ्यधिकारे प्राग्वच्छुक्रादीनामित्यनेनातिदिष्टस्य भुक्तिमन्दफलस्य तिथ्यधिकारोक्तो यो विशेषस्तं च सार्द्धार्ययाऽऽह ।

शुक्रस्य सूर्यवत् फलमिन्दुसुतस्य द्विसङ्गुणितम् ॥११॥
भौमस्य पञ्चगुणितं गुरोः स्वरांशेन संयुतं द्विगुणम् ।
सौरेर्मनुभागयुतं चतुर्गुणं शीघ्रकेन्द्रांशैः ॥१२॥

शुक्रस्य मन्दफलं सूर्यवदुत्पाद्यम् । अयमर्थः । य एव मध्यमः सूर्यः स एव मध्यमः शुक्रस्ततस्तस्मात् स्वमन्दोच्चं विशोध्य मन्दकेन्द्रं

कुर्यात्तस्य तद्भुक्तेश्च धनर्णचिह्नं विधाय भुजं विदध्यात्। तेन रविभुजफलचापलिप्ताखण्डकैः पञ्चगुणा इत्यादिभिरुक्तवत् फलमुत्पाद्यम्। तच्छुक्रस्य मन्दफलं भवति। एवं तद्भुक्तेरपि ग्रहजफलस्य खण्डकेन फलमुत्पादयेत्। बुधस्य तु स्वमन्दोच्चेनानेनैव विधिनोत्पादितफलं द्वाभ्यां गुणनीयम्। भौमस्य स्वमन्दोच्चादनेन विधिनोत्पन्नफलं पञ्चगुणं कार्यम्। गुरोस्तु स्वमन्दफलं स्वसप्तमांशेन संयुतं द्विगुणं विदध्यात्। सौरेः पुनरेतद्विधिनोत्पन्नं फलं स्वचतुर्दशभागान्वितं सच्चतुर्गुणं कृत्वा वक्ष्यमाणोत्तरोक्त्या पञ्चांशोनं कुर्यात्। अत्र पञ्चांशोनत्वं परिध्यपेक्षयोक्तम्। ब्राह्मसिद्धान्ते परिध्यपेक्षया तु षडंशोनत्वमुदितं तदत्र तद्विदः प्रमाणमिवमेषां स्वस्वमन्दफलं भवति। एतच्च स्वस्वमन्दनीचोच्चपरिध्यंशवशात् ज्ञेयम्। तथा च पौलिशतन्त्रे।

भौमादिमन्दकर्मणि परिधिर्नीचोच्चवृत्तस्य।
सप्ततिरष्टाविंशतिरब्धिगुणाः समनवः खषड् भागाः॥

इति मन्दपरिधिर्भौमस्य ७०। बुधस्य २८। गुरोः ३२। शुक्रस्य १४। शनेः ६०। शीघ्रकेन्द्रांशैरित्यस्योत्तरत्र सम्बन्धो भविष्यति।

अथ भौमादीनां शीघ्रफलोत्पादनाय स्वस्वशीघ्रकेन्द्रांशैर्भुजफलचापभागा निबद्धास्तेषां मध्याद्भौमस्य तावत्तानार्याभ्यामाह।

**भौमोऽष्टयमैः२८ रुद्रान्११-**
**भुक्त्वा पूर्वोदिता रदैः३२रर्कान्१२।**
**खगुणैः३०ईशैः११ रूपगुणैः३१**
**सप्तांशा७न्मनुभि१४रर्द्धांशान्॥१३॥**
**धनमृणमग्निशशाङ्कैः१३३-**
**स्त्रीः३नष्ट्या१६ भास्करा१२नतो वक्री।**

नवभि९स्त्रयोदश१३ नगै७
र्द्वादश१२सार्द्धान् विलोमोऽतः ॥१४॥

भौमः कुजोऽष्टयमैरष्टाविंशतिशीघ्रकेन्द्रांशैः रुद्रानेकादश भुजफलचापभागान् भुक्त्वा पूर्वस्यामुदितः । ततो रदैर्द्वात्रिंशता शीघ्रकेन्द्रांशैरर्कान् द्वादश भुङ्क्ते । खगुणैस्त्रिंशता सप्तांशान् मनुभिश्चतुर्दशभिरर्द्धांशं त्रिंशत्कलाः । एवं पञ्चत्रिंशदधिकशतशीघ्रकेन्द्रांशैः सार्द्धचत्वारिंशत्फलभागा भवन्ति । एतदूनं परं वा । अथ ऋणम् । अग्निशशाङ्कैस्त्रयोदशभिस्त्रीनृणभागान् भुङ्क्ते । षोड़शभिर्भास्करान् । एवं पञ्चचत्वारिंशता शीघ्रकेन्द्रांशैः परममृणं तावदेवातः षडशितुल्ये केन्द्रे धनर्णाश्च तानेव तैरेव स्वस्वकेन्द्रांशैर्भुंक्ते । साम्यात् फलाभावोऽतोऽनन्तरं चक्रार्द्धाधिके केन्द्रे विलोम उत्क्रमवृत्त्या ऋणफलभागांश्च तानेव तैरेव स्वस्वकेन्द्रांशैर्भुंक्ते । चक्रतुल्ये च केन्द्रे ऋणधनसाम्यात् फलाभावः । येषु च फलभागेषु भुक्तेषु वक्रो भवति उत्क्रमेण तेष्वेव प्रविशन् वक्रं त्यजति । यांश्च भुक्त्वा पूर्वस्यामुदितस्तानेव प्रविशन् दिग्वैपरीत्येन पश्चिमायामस्तं करोति । अथैषां फलांशानामुत्पत्तिः । तत्र पौलिशादिषु कुजादीनां शीघ्रनीचोच्चवृत्तपरिधिभागाः ।

त्र्यग्नियमा रदशशिनो द्विनगाः खरसाश्विनः सदलनन्दगुणाः ।
त्रिज्याघ्ना भांशहृतास्तलान्तजीवाः कुजादीनाम् ॥

२३३, १३२, ७२, २६०, ३९।३०, एतैः पृथक् पृथक् हता त्रिज्या भांशैः ३६० हृता जाता यथाक्रमं परमफलज्या ८७।५, ५५।३०, १०८।२०, १६।२२, आसां चापानि परमशीघ्रफलभागाः ४०।३०, २१।३०, ११।३०, ४६।१५, ६।२०, अथाष्टयमै रुद्रानित्यादीनामुपपत्तिः । तत्र कुजस्य शीघ्रकेन्द्रभागाः २८ एषां भुजज्या ७०।२०

भुजं राशित्रयादपास्य शेषं कोटिः २।२ अस्या ज्या १ः २।३१ एते उभे ज्ये परमफलज्यागुणिते त्रिज्याभक्ते च जाते भुजफलकोटिफले ४५।३३, ८५।२६, प्रथमे केन्द्रपदे कोटिफलं व्यासार्द्धे धनं जाता स्फुटकोटिः २३५।४६ भुजकोट्योर्वर्गौ २०७५, ५५५५८६ अनयोर्युति-मूलं कर्णः २४० भुजफलं त्रिज्याहतं ६८३२ कर्णहृतं च लब्धम् २८।२८ अस्य चापम् ६५७ अतः षष्ठ्याऽर्द्धाधिकत्वेन लब्धम् ११ सिद्धा अष्टयमे रुद्रानिति। अथाष्टयमे रदयुतैः केन्द्रांशैः ६० केन्द्रं २।०।०।० त्रिभात् शुद्धं कोटिः १।०।०।० अनयोर्ज्ये १३०, ७५ परम-फलज्यागुणिते त्रिज्याभक्ते च जाते भुजकोटिफले ८४।८, ४८।३२, केन्द्रस्य प्रथमपदस्थत्वात् कोटिफलं व्यासार्द्धे धनं जाता स्फुटकोटिः १९८।३२ भुजकोट्योः कृतियुतिपदं कर्णः २१५ भुजफलं त्रिज्याहतं कर्णेन भक्तं च लब्धम् ५८।३२ अस्य चापम् १३८० षष्ठ्या हृतं २३ प्राक्फलभागे रुद्रैरूनम् १२ जाता रदैरर्कानिति। अथ प्राक्-केन्द्रभागेषु खगुणयोगे ९० केन्द्रं ३ भुजज्या १५० कोटिज्या ० परमफलज्यागुणिता भुजज्या त्रिज्याभक्ता च सैव परम फलज्या। भुजफलम् ९०।५ कोटि फलम् ० अतस्त्रिज्यैव स्फुटकोटिः १५० भुजकोट्योर्वर्गयोगपदं कर्णः १७८।४० भुजफलं त्रिज्यागुणितं कर्णहृतं लब्धं * ८१।४८ अस्य चापम् १९८० षष्ठ्या हृतम् ३३ प्राक्-फलभागेः २३ उनं १० सिद्धाः खगुणैर्दशेति।

अथ प्राक्केन्द्रांशा ९० रूपगुणयुताः १२१ केन्द्रम् ४।१ भुजः १।२९ कोटिः १।१ अनयोर्ज्ये १२८।३७, ७७।१३ फले ८३।१५, ४९।५६ केन्द्रस्य द्वितीयपदस्थत्वात् कोटिफलं व्यासार्द्धात् संशोध्य जाता स्फुटकोटिः १०१ भुजकोटिकृतियुतिपदं कर्णः १३०।२६ भुजफलं व्यासार्द्धगुणं कर्णहृतम् ९६।१४ अस्य चापम् २४०० षष्ठ्या हृतम् ४० प्राक्फलांशैः ३३ ऊनं ७ सिद्धा रूपगुणैः सप्तांशा इति। अथ प्राक्-

---

* लिखितपुस्तकेऽत्र किमपि नास्ति

केन्द्रांशाः १२१ मनुयुक्ताः १३५ केन्द्रम् ४।१५ अत्र भुजकोटिज्ये समे ११६ फले ६८, ३६ कोटिफलेन व्यासार्द्धं हीनं जाता स्फुट-कोटिः ८१।२४ प्राग्वत्कर्णः १०६।२७ भुजफलं त्रिज्याहतं कर्ण-भक्तञ्च लब्धम् ८६।४० अस्य चापम् ४०।३० अस्मात्प्राक्फलभागान् विशोध्य जातं मनुभिरर्द्धांशमिति। एवं केन्द्रांशाः १३५ फलभागाः ४०।३० एतत् कुजे परमधनम्।

अथ ऋणखण्डकोत्पत्तिः। अत्र प्राक्केन्द्रांशास्त्रयोदशयुताः १४८ केन्द्रं ४।२८ भुजः १।२ कोटिः १।२८ ज्ये ७८।२५, १२७।१२ फले ५१।२४, ८२।२० केन्द्रस्य द्वितीयपदस्थत्वात् कोटिफलं व्यासा-र्द्धाच्छुद्धं स्फुटकोटिः ६७।४० भुजकोट्योः कृतियोगः ७२२१।४७ अस्मान्मूलं कर्णः ८४।५८ अनेन त्रिज्याहतभुजफलाल्लब्धम् ९०।४२ अस्य चापम् २२५० षष्ट्या भक्तम् ३७।३३ एतद्धनं परमधनाद-पास्य शेषं जातमृणखण्डमग्निशशाङ्कैस्त्रीनिति। अथ प्राक्केन्द्रांशे-ष्वष्टिं संयोज्य जातम् १६४ केन्द्रम् ५।१४ अत्र भुजांशाः १६ कोट्यंशाः ७४ अनयोर्ज्ये ४१।३०, १४६।१७, फले २६।१५, ९४।४१, केन्द्रस्य द्वितीयपदस्थत्वात् कोटिफलहीना त्रिज्या स्फुटकोटिः ५५।१९ कर्णः ६२।२४ अनेन लब्धं ६४ अस्य चापम् १५३८ षष्ट्या भक्तम् २५।३८ एतद्धनं प्राग्धनादपास्य जातं द्वितीयमृण-खण्डं अष्ट्या भास्करानिति। अतोऽनन्तरं कुजो वक्री पश्चान्न-तिरुपलभ्यते। अथ प्राक्केन्द्रांशेषु नव संयोज्य जातं केन्द्रम्। ५।२३ अत्र भुजांशाः ७ कोट्यंशाः ८३ अनयोर्ज्ये १८।१२, १४८।५५, फले ११।४७, ९६।२२, कोटिफलहीना त्रिज्या स्फुटकोटिः ५३।३७ भुजवर्गः १३८।५१ कोटिवर्गः २८७४।४५ अनयोर्योगमूलं कर्णः ५४।५४ अतो लब्धम् ३२।१२ अस्य चापम् ७४२ एतत्प्राग्धना १५३८ दपास्य जातम् ७९५ नवभिस्त्रयो-दशेति तृतीयमृणखण्डम्। अत्र शेषकला १५ उपेक्षिताः।

शेषकेन्द्रांश ७ फलभागाः १२।३० एतच्चतुर्थमृणखण्डम् नगैर्द्वादश सार्द्धानिति। चक्रार्धतुल्यकेन्द्रे धनर्णसाम्यात् फलाभावः। चक्रार्धाधिके केन्द्रे उत्क्रमेणैव केन्द्रांशैः फलभागानुत्पादयेत्।

एभिर्निर्दिष्टभागैः क्रमोत्क्रमाभ्यां ग्रहस्य शीघ्रफलमुत्पाद्यम्। एतदेवास्मदुपाध्यायोक्तोत्तरे श्लोकैरुक्तम्।

अंशीकृताच्च द्राकेन्द्राद्गतभागान् विशोधयेत्।
शेषमंशादिकं शीघ्रफलाय विकलं स्मृतम् ॥१॥
विकलं स्पष्टखण्डघ्नं भोग्यभागविभाजितम्।
लब्धं भुक्तयुतं मन्दशीघ्रयोस्तद्गणं फलम् ॥२॥
धनखण्डे धनं शीघ्रमृणखण्डे ऋणं फलम्।
धनादपास्य संस्कार्यं विपरीतं विलोमतः ॥३॥
आदौ न कुर्यादन्ते च मन्दज्याक्रान्तिकर्मसु।
आदिमध्यावसानेषु शीघ्रेन स्पष्टखण्डकम् ॥४॥
उदयास्तमयौ वक्रमार्गौ व्यस्तौ विलोमतः।
केन्द्रांशैरुदयास्तोऽनु दिग्वत्यासाद्विनिर्दिशेत् ॥५॥

अयमर्थः। यो ग्रह इष्टकालिकः स्पष्टीकर्त्तुमिष्टो भवेत् तं तात्कालिकं स्फुटीकरणोचितं तच्छीघ्रोच्चं च कर्मभूमौ संस्थाप्य वक्ष्यमाणोक्त्या शीघ्रोच्चं मध्यमग्रहेणोनं विदध्यात् तत् शीघ्रकेन्द्रमुच्यते। तत्र ये राशयस्तांस्त्रिंशता हत्वाऽधःस्थितांशांस्तत्र योजयेत्तस्मादष्टयमादिकान् भागान् विशोधयेद्यावन्तः शुद्ध्यन्ति। शुद्धेषु च तेषु भागेषु भुक्तभोग्यचिह्नं कुर्यात्। शेषमंशादिकं विकलमुच्यते। तदनष्टं कुर्यात्। ततो भोग्यखण्डस्पष्टीकरणायोत्तरे आर्याद्वयं यथा।

भुक्तगतिफलांशगुणा
भोग्यगतिर्भुक्तगतिहृता लब्धम्।
भुक्तगतेः फलभागा-
स्तद्भोग्यफलान्तरार्द्धहृतम् ॥१५॥

विकलं भोग्यगतिहृतं
लब्धेनोनाधिकं फलैक्यार्द्धम।
भोग्यफलादधिकोनं
तद्भोग्यफलं स्फुटं भवति ॥१६॥

अयमर्थः। गतिशब्देन गमनमुच्यते। तच्च प्रस्तावात् केन्द्रस्यैव गृह्यते। ततो भुक्ता चासौ गतिश्च भुक्तगतिः। तस्याः फलांशाः। तदयमर्थः। अतीतनिर्दिष्टकेन्द्रांशानां ये फलांशास्तैर्निर्दिष्टभोग्यकेन्द्रांशान् हत्वा पूर्वभुक्तकेन्द्रांशैर्भजेल्लब्धं भोग्यगतिपरिणता भुक्तगतेः फलभागास्ते च ते कृत्रिमा इति पूर्वं सूरिभिः सङ्केतितास्तेषां भोग्यगतिफलांशानां च यदन्तरं तस्यार्द्धेन विकलसंज्ञादि गोमूत्रिकया द्विःस्थानस्थं गुणयित्वाऽधः षष्ठ्या विभज्य लब्धमुपरि संयोज्य मध्यमराशियोगं च विधाय पुनः षष्ट्या लब्धमुपरि संयोज्य मध्यमराशौ संयोज्य च पुनः षष्ट्या लब्धमुपरि संयोज्य भोग्यगतिकेन्द्रांशैर्भजेत्ततो लब्धांशादिफलेन फलैक्यार्द्धं ययोः प्रागन्तरार्द्धं कृतं तयोरेव कृत्रिमफलभागानां भोग्यगति फलांशानाञ्च यद्योगार्द्धं तद्यदि भोग्यफलादधिकं तदोनमूनं चेदधिकं कार्यम्। एवं भोग्यांशसम्बन्धि कर्मयोग्यं स्पष्टखण्डकं भवति।

अत्र वासना। भुक्तगतिभोग्यगत्योरत्र विसदृशत्वात् भुक्तगतेः फलभागास्त्रैराशिकेन भोग्यगतौ परिणाम्यन्ते। यदि भुक्तगत्या स्वीयफलभागा लभ्यन्ते तद्भोग्यगत्या किमिति लब्धं भोग्यपरिणता भुक्तगतिफलभागा इति। मन्दकर्मणि तु पञ्चदशभिर्भागैः सर्वाण्यपि खण्डकान्युत्पाद्य निबद्धानि। तैरेव तानि लभ्यन्ते। अत्र पुनरष्टयमैरुद्रा रदैर्दशेत्यादि विसदृशत्वं तस्मात् प्रमाणेच्छयोरतुल्यत्वान्नवशतभाजकस्थाने कल्पितया भोग्यगत्या भुक्तगतेः

सम्बन्धिनः सिद्धाः फलभागाः क्रियन्ते। अतः शेषन्तु मन्दकर्मोक्तस्पष्टखण्डकवासनयैव गतार्थमिति। स्पष्टखण्डके च सिद्धे विकलं गोमूत्रिकया त्रिष्ठं त्रिष्ठस्पष्टखण्डकेन हत्वाऽधोऽधः षष्ट्या लब्धमुपर्युपरि संयोज्य मध्यमराशियोगं विधाय प्रथमस्थाने भोग्यगत्या भजेल्लब्धं यदंशादि फलं तद्यदि धनखण्डकोत्पन्नं भवेत्तदा भुक्तकेन्द्रांशसम्बन्धिऋणखण्डकैक्ये संयोज्य तत्परग्रहे धनं कार्यम्। अथ ऋणखण्डकोत्पन्नं फलं भवेत्तदा केन्द्रांशसम्बन्धिऋणखण्डकैक्ये संयोज्य तत्परमधनादपास्य शेषं धनं संस्कार्यं क्रमेण। चक्रार्द्धतुल्ये केन्द्रे धनर्णसाम्यात् फलाभाव उत्क्रमेण तु ऋणखण्डकोत्पन्नं भुक्तफलभागैक्ये संयोज्य ऋणं संस्कार्यं धनखण्डकोत्पन्नं च भुक्तफलभागैक्ये संयोज्य तत्परमर्णादपास्य शेषमृणं संस्कार्यम्। यावच्चक्रतुल्ये केन्द्रे ऋणधनसाम्यात् फलाभाव इति। खण्डकस्पष्टीकरणं मन्दकर्मण्यादावन्ते चान्तराभावात् शीघ्रकर्माणि पुनरादिमध्यावसानेषु न कुर्यादिति। उदयास्तौ वक्रमार्गौ च कालांशमितैः केन्द्रांशैर्दिग्व्यत्ययतो ज्ञेयौ। येष्ववभुक्तेषु ग्रहस्य पूर्वस्यामुदयस्तेष्वेवोत्क्रमेण प्रविशतः पश्चिमायामस्तं येष्वेव च भुक्तेषु पश्चिमायामुदयस्तेष्वेवोत्क्रमेण प्रविशतः पूर्वस्यामस्तं येष्वेव च क्रमेण भुक्तेषु वक्रं उत्क्रमेण तेष्वेव प्रविशतो मार्ग इति।

अथ फलानयनवासना। कक्षामण्डले मेषादेरारभ्य यत्र राशिभागादिके प्रदेशे स्वशीघ्रोच्चं वर्त्तते तत्र चिह्नं विधाय मन्दकर्मवत् प्रतिमण्डलादि स्वशीघ्रनीचोच्चवृत्तं निर्माय दीर्घवंशशलाकायुतं विदध्यात्तद्वृत्तमध्यं च स्ववंशशलाकास्थं कक्षामण्डले मन्दस्फुटग्रहे स्थितं भ्रमति। तच्चालनाच्च फलव्यक्तिर्भवति। स्पष्टग्रहस्य तत्परिधिप्रतिमण्डलपरिध्योः सम्पाते स्थितः स्वशीघ्रोच्चादनुलोमं भ्रमति। ततो यत्र परिधिसम्पातस्तत्र स्फुटग्रहो मध्यमश्च कक्षायाम्। स्पष्टमध्यान्तरं च फलम्। तथा चादित्यप्रतापसिद्धान्ते।

मध्यं नीचोच्चवृत्तस्य मध्ये भ्रमति संस्थितम्।
अनुलोमं मृदूच्चात्स्वात् प्रतिलोमं चलोच्चतः ॥१॥
नीचोच्चवृत्तपरिधौ शीघ्रोच्चादनुलोमगः।
प्रतिलोमगतिर्मन्दतुङ्गाच्च भ्रमति ग्रहः ॥२॥
एवं प्राग् मृदुकेन्द्रांशैर्मध्यो मन्दाच्चलोच्चतः।
चलकेन्द्रलवैः पश्चात् स्फुटश्च प्रतिमण्डले ॥३॥
यत्र नीचोच्चवृत्तस्य परिणाहेन युज्यते।
परिधिः प्रतिवृत्तस्य तत्र स्पष्टो नभश्चरः ॥४॥
प्रतिमण्डलसंस्थोऽपि द्रष्टुर्भूस्थस्य पश्यतः।
याति दृग्विषयं स्पष्टः कक्षायां गगनेचरः ॥५॥

इति। एवं स्थिते फलानयनोपपत्तिरुच्यते। स्वकेन्द्रपदस्य गता गम्या वा ये भुजांशास्तेऽवशेषाः कोट्यंशास्तेषामुभयेषामपि पृथक् पृथक् ज्यां गृह्णीयात्। ते च भुजकोटिज्ये प्रतिमण्डल-सम्बन्धिन्यौ सत्यौ त्रैराशिकेन स्वशीघ्रनीचोच्चवृत्ते परिणाम्येते। तद्यथा। यदि त्रिज्यावृत्ते एतावती भुजज्या कोटिज्या च तत्परम-फलज्यावृत्ते कियत्यौ ते इति लब्धे स्वनीचोच्चवृत्ते परिणते भुजकोटिज्ये भुजफलकोटिफलसंज्ञिते। ततो यदि प्रथमान्त्यपदयोः केन्द्रं भवेत्तदा कोटिफलेन युता सती त्रिज्या स्फुटकोटिर्भवति। यदि च द्वितीयतृतीयपदयोः केन्द्रं भवेत्तदा कोटिफलेन हीना त्रिज्या स्फुटकोटिर्भवति। यतः प्रथमान्त्यपदयोः कक्षामण्डलादुपरि कोटिफलं मध्यपदयोस्तु कक्षामण्डलादधः कक्षामण्डले त्रिज्या अत-स्तया कोटिफलस्य हीनयुतत्वमुपपद्यते। स्फुटकोटेर्भुजफलस्य च वर्गयोगात् यन्मूलं तत्स्पष्टग्रहभूमध्यान्तरं कर्ण इत्युच्यते। तेन च कर्णसूत्रेण स्फुटग्रहबिम्बमध्यात् भूमध्यप्रापिणा कक्षामण्डलस्य यः प्रदेशः स्पृष्टस्तस्य मध्यग्रहप्रदेशस्य च यदन्तरं सा ग्रहस्य भुजफलज्या। तदर्थं त्रैराशिकम्। यदि स्फुटकर्णस्य भुजफलं

भुजस्त्रिज्याकर्णस्य क्रियानिति। लब्धं कक्षामण्डले भुजफलज्या। तच्चापं ग्रहस्य शीघ्रभुजफलं भवति। तच्च यदि प्रतिमण्डलप्रथमान्त्यपदयोरुत्पन्नं भवेत्तदा धनं भवति। यतोऽनयोः पदयोर्मध्यग्रहप्रदेशात् स्फुटग्रहप्रदेशोऽग्रतो भवति। कक्षायां मध्यपदयोस्तु मध्यग्रहप्रदेशोऽधोऽवलम्बितः कक्षावृत्ते पश्चाद्दृश्यतेऽतस्तदुत्पन्नं फलमृणं क्रियते। ततः स्फुटो भवति। प्रतिमण्डलपदप्रमाणं च यथा राजमृगाङ्के।

त्रिभमन्त्यफलोपेतं पदमाद्यं द्वितीयकम्।
चक्रार्द्धान्तं व्यन्त्यफल-नवभान्तं तृतीयकम्॥
ततश्चतुर्थं चक्रान्तं पदानि प्रतिमण्डले।

शिष्यधीवृद्धिदतन्त्रेऽपि।

बाणाब्धिभिः ४५ शशिगुणैः ३१ खयमैः २० खबाणै-५०
रङ्कै६र्लवैस्त्रिभटहमाद्यपदं युतं स्यात्।
ऊनं तृतीयमिति केन्द्रपदोक्तलक्ष्म
बुद्धा गतौ चलफलं स्वमृणं विधेयम्॥ इति।

अथ बुधस्य शीघ्रकेन्द्रांशफलभागानार्याद्वयेनाह।

एकेषुभि५१स्त्रयोदश१३
भुक्त्वाऽभ्युदितोऽपरेण सोमसुतः।
अष्टाग्निभिः३८ स्वरान्७ शशि-
गुणैश्च३१ सार्द्धं स्वमृणमस्मात्॥१७॥
षड्विंशत्या २६ विषयान् ५
वक्री नवभि९र्दलाधिकं त्रितयम्३।
अपरेऽस्तमितस्तत्त्वै-२५
स्त्रयोदशांशान्१३ विलोमः प्राक्॥१८॥

सोमसुतो बुध एकेषुभिरेकपञ्चाशता शीघ्रकेन्द्रांशैस्त्रयोदश-भुजफलचापभागान् भुक्त्वाऽपरेण पश्चिमायामुदितः सन् अष्टाग्निभिरष्टत्रिंशतांऽशैः स्वरान् सप्त फलभागान् भुङ्क्ते। शशिगुणै-रेकत्रिंशतांऽशैः सार्द्धमर्श भुंक्ते। एवं विंशत्यधिकशतसङ्ख्यशीघ्र-केन्द्रांशैः सार्द्धैकविंशतिभागान् भुंक्ते। एतच्च वक्ष्यमाणोत्तरोक्त्या षोडशभागाधिकं कार्यम्। एतद्वनं परमम्। * "ततः षड्विं-शत्यांऽशैर्विषयान् पञ्चभागान् भुंक्ते" तदनन्तरं वक्री पश्चाद्गतिः सन्नवभिरंशैर्दलाधिकं सार्द्धं त्रितयं भागानां त्रीन् भागान् सार्द्धान् भुंक्ते। तदनन्तरमपरे पश्चिमायामस्तमितः सन् तत्त्वैः पञ्चविंशत्या त्रयोदश फलभागान् भुङ्क्ते। एवं षष्ट्या केन्द्रांशै-स्तावत एव ऋणगतफलभागान् भुंक्ते। चक्रार्द्धतुल्ये च केन्द्रे धनर्णसाम्यात् फलाभावोऽतोऽनन्तरं विलोमो विपरीत उत्क्रमो ज्ञेय इत्यर्थः। ततस्तत्त्वैस्त्रयोदशांशान् भुक्त्वा प्राक् पूर्वस्यामुदयं करोति। अष्टाग्निभिः स्वरांशांश्च भुक्त्वा प्रागेवास्तं करोति इति। अत्रापि स्वोपकरणैर्भौमवत् फलभागोत्पत्तिर्ज्ञेया। अत्र षोडशभागाधिकत्वं परिध्वंशवशादुत्तरे उक्तम्। तच्च ब्रह्मसिद्धान्तादिषु व्यभिचारात्सदिव न प्रतिभाति तदत्र तद्विदः प्रमाणमिति।

अथ गुरोः शीघ्रकेन्द्रांशैर्भुजफलचापभागानार्याद्वयेनाह।

मनुभिः१४ सत्र्यंशौ द्वौ२
भुक्त्वा प्रागुद्गतः खवेदैः४० षट्६।
षट्कृत्या३६ त्रीन्३ धृत्या१८
षड्भागं ०।१० धनमृणोक्तिरतः ॥१९॥

---

* मूलपुस्तके इयं पंक्तिर्नास्ति।

द्विकयमलै२२रध्यर्द्धं
वक्री मनुभि१४र्द्वयं२ नखै२०श्चतुरः४ ।
अष्ट्या१६ चतुरो४ भागान्
विपरीतमतः पुनर्जीवः ॥२०

जीवो बृहस्पतिः मनुभिश्चतुर्दशभिः शीघ्रकेन्द्रांशैः द्वावंशौ सत्र्यंशौ विंशतिकलासहितौ भुक्त्वा प्राक् पूर्वस्यामुदितः सन् खवेदैश्चत्वारिंशता षड़ंशान् भुंक्ते * "ततः षट्कृत्या षट्त्रिंशता केन्द्रांशैस्त्रीन् भागानतश्च धृत्याऽष्टादशभिः केन्द्रांशैः षड्भागं कलादशकं भुंक्ते। एवं अष्टाधिकशतसंख्यकेन्द्रांशैः सार्द्धानेकादश धनफलभागान् भुंक्ते।" एतत्परमधनम्। अतोऽनन्तरमृणफलभागानाभुक्तिः। तत्र द्विकयमलैः द्वाविंशत्या अध्यर्द्धं सार्द्धमंशं भुंक्ते। ततो वक्री पश्चाद्गतिः सन् मनुभिश्चतुर्दशभिरंशद्वयम्। नखैर्विंशत्या चतुरोंऽशान्। अष्ट्या षोड़शभिश्चतुर एव भागान्। एवं द्वासप्तत्या शीघ्रकेन्द्रांशैस्तावत एव ऋणगतफलभान् भुंक्ते। एवं चक्रार्द्धतुल्ये केन्द्रे धनर्णसाम्यात् फलाभावः। अतोऽनन्तरं चक्रार्द्धाधिके केन्द्रे विपरीतमुत्क्रमेण केन्द्रांशाः फलांशाश्च ज्ञेया इति। तत्रान्त्यामनुसंख्यकेन्द्रांशान् प्रविशन् पश्चिमायामस्तमेति। चक्रतुल्ये च केन्द्रे ऋणधनसाम्यात् फलाभावः। अत्रापि पूर्ववत्स्वोपकरणैरुत्पत्त्यादिकं ज्ञेयमिति।

अथ शुक्रस्य शीघ्रकेन्द्रांशैर्भुजफलचापभागानार्याद्वयेनाह।

भुक्त्वोदितो जिनै२४र्दश१०
पश्चान्नन्दाग्निभि३१र्भृगुसुतोऽष्टिम्१६ ।
त्रिगुणैः३३ सूर्यान्१२ त्रिघने-
न२७ सप्त७ धृत्या१८ सपादांशम्१।१५ ॥२१॥

* "—" एतच्चिह्नान्तर्गता पंक्तिर्मलपुस्तके नास्तीति

स्वमृणं त्र्यैकै १३ श्चतुरः ४
पादाभ्यधिकान् भवै ११ र्दिशो १० वक्री।
सूर्यै १२ र्जिना २४ नष्टश्च-
स्त्रिभि ३ रष्टौ ८ प्राग्विलोमोऽतः ॥२२॥

भृगुसुतः शुक्रो जिनैश्चतुर्विंशत्या शीघ्रकेन्द्रांशैर्दश भुजफलभागान् भुक्त्वा पश्चाद्दिश्युदितः सन् नन्दाग्निभिरेकोनचत्वारिंशतांऽशैरष्टिं षोड़शभागान् भुङ्क्ते। त्रिगुणैस्त्रयस्त्रिंशतांऽशैः सूर्यान् द्वादश, त्रिघनेन सप्तविंशत्या सप्तांशान्, धृत्याऽष्टादशभिः सपादांशं पञ्चदशकलाधिकमेकमंशं भुंक्ते। एवमेकचत्वारिंशदधिकशतसङ्ख्यशीघ्रकेन्द्रांशैः सपादषट्चत्वारिंशद्भुजफलभागान् भुंक्ते। एतत् परमधनम्। अतोऽनन्तरमृणं ज्ञेयम्। तत्र त्र्येकैस्त्रयोदशभिश्चतुरः सपादान् भुंक्ते। भवैरेकादशभिर्दिशो दशांशान् भुंक्ते। अतोऽनन्तरं वक्री पश्चाद्गतिः सन् सूर्यैर्द्वादिशभिर्जिनान् चतुर्विंशतिमंशान् भुंक्ते। अतोऽष्टश्यः पश्चिमायामस्तमितः सन् त्रिभिः केन्द्रांशैरष्टौ फलभागान् भुंक्ते। एवमेकोनचत्वारिंशता केन्द्रांशैस्तावन्त एव ऋणफलभागा जाताः। अतश्चक्रार्द्धतुल्यकेन्द्रे धनर्णफलाभावः। अतोऽनन्तरं चक्राधिके केन्द्रे विलोम उत्क्रमगत्या स्वस्वकेन्द्रांशैः स्वस्वफलभागान् भुञ्जन् प्राक् पूर्वस्यां यथानिर्दिष्टकेन्द्रभागैरुदयास्तौ करोति। येषु भुक्तेषु पश्चिमायामस्तं करोति तेषु प्रविशन् पूर्वस्यामुदेति। येषु च भुक्तेषु पश्चिमायामुदेति तेषु प्रविशन् पूर्वस्यामस्तमेतीत्यत्रापि पूर्ववत् स्वोपकरणैरुत्पत्त्यादिकं ज्ञेयमिति।

अथ शनेः शीघ्रकेन्द्रांशैर्भुजफलभागनिर्देशमार्याद्वयेनाह।

विंशत्या२० द्वौ२ भुक्त्वा
प्रागुदितो रसहुताशनै३६स्त्रितयम्३ ।
खयमै२०रंशकमेकं१
नखै२०स्त्रिभागांशकं स्वमृणम् ॥२३॥
विंशत्यां२०ऽशत्र्यंशं
वक्री सप्तदशभिः१७ शनिर्भागम्१ ।
द्वाविंशत्या२२ द्वितयं२
तत्त्वै२५स्त्रितयं३ विलोमोऽतः ॥२४॥

शनिर्विंशत्या शीघ्रकेन्द्रांशैर्द्वौ भुजचापभागौ भुक्त्वा पूर्वस्यां प्रागुदितः सन् रसहुताशनैः षट्त्रिंशता त्रितयमंशानां भुंक्ते। खयमैर्विंशत्या एकमंशं नखैर्विंशत्या केन्द्रांशैस्त्रिभागांशकम्। अंशकस्य त्रिभागो विंशतिकलास्ता भुंक्ते। एवं षण्णवत्या शीघ्रकेन्द्रांशैः सत्रिभागान् षडंशानुपभुंक्ते। एतत् परमधनम्। अथ ऋणम्। विंशत्या केन्द्रांशैरंशस्य त्र्यंशं विंशतिकला भुंक्ते। ततो वक्री पश्चाद्गतिः सन् सप्तदशभिः केन्द्रांशैर्भागमेकं भुंक्ते। द्वाविंशत्या द्वितयं द्वौ भागौ। तत्त्वैः पञ्चविंशत्या त्रितयम्। त्रीन् भुजफलभागान्। एवं चतुरशीतिशीघ्रकेन्द्रांशैस्तावदेव ऋणम्। अतश्चक्रार्द्धतुल्ये केन्द्रे धनर्णसाम्यात् फलाभावः। अतोऽनन्तरं चक्रार्द्धाधिके केन्द्रे विलोमो विपरीतो ज्ञेयः। उत्क्रमगत्या तैरेव केन्द्रांशैस्तानेव फलभागान् भुंक्ते। तत्रत्यान् विंशतिकेन्द्रांशान् प्रविशन् पश्चिमायामस्तमेति। चक्रतुल्ये च केन्द्रे ऋणधनसाम्यात् फलाभावः। उत्पत्त्यादिकं पूर्ववत् स्वोपकरणैर्ज्ञेयमिति।

अथ भौमादीनां मन्दशीघ्रफलसंस्कारव्यवस्थायाः स्पष्टत्वप्रतिपादनाय शीघ्रकेन्द्रविधानाय चार्यामाह—

शीघ्रफलार्द्धं मध्ये मन्दफलार्द्धं च मन्दशीघ्रफले।
सकले मध्ये स्पष्टः शीघ्रं मध्योनकं केन्द्रम् ॥२५॥

मध्ये स्फुटीकारोचिते ग्रहे य उक्तविधिनाऽहर्गणादुत्पाद्य बीजादिफलसंस्कृतस्तस्मादुक्तविधिनैव शीघ्रफलमुत्पाद्य तस्यार्द्धं यथागतमृणं धनं वा तस्मिन्नेव स्फुटीकारोचिते संस्कार्यम्। तस्मादेककर्मसंस्कृतादुक्तविधिना मन्दफलमुत्पाद्य तदप्यर्द्धीकृत्य यथागतमृणं धनं वा तस्मिन्नेवैककर्मसंस्कृते संस्कुर्यादेवं कर्मद्वयसंस्कृतो ग्रहो भवति। तस्माच्च ये मन्दशीघ्रफले ते सकले अखण्डे यथागते एव मध्ये संस्कार्ये। अयमर्थः। द्विः कर्मसंस्कृतादुक्तविधिना मन्दफलमुत्पाद्य तत्सकलमेव मध्ये स्फुटीकारोचिते संस्कार्यम्। तस्मात्तृतीयमन्दकर्मसंस्कृते संस्कार्यमेवं कर्मचतुष्टयेन भौमादिग्रहः स्पष्टो नलकादियन्त्रयोग्यो भवति। शीघ्रोच्चं च मध्यग्रहेणोनं सत् शीघ्रकेन्द्रं भवति।

अत्र वासना। स्पष्टमध्यमग्रहयोर्यद्योगार्द्धं स स्फुटासन्नो ग्रहो भवति। तस्माच्च मन्दफलमुत्पाद्य मध्यमे संस्कुर्यात्। शीघ्रफलं तस्मादेवोत्पाद्य तस्मिन्नेव संस्कार्यमेवं ग्रहः स्फुटो भवति। स्पष्टमध्यग्रहयोरन्तरं फलद्वयमेवातस्त्वाचार्येण तदेव फलद्वयं प्रथममर्द्धीकृत्य संस्कृतं तद्द्वारेण ग्रहस्य स्फुटासन्नत्वं प्रकल्पितम्। प्रथमं च यत् शीघ्रफलार्द्धं तन्मन्दस्फुटस्यैव संस्कारविशेषायेत्युपपन्नम्। तथा च राजमृगाङ्ककरणे।

स्पष्टमध्यमयोरैक्यं दलितं मध्यसंज्ञकम्।
स्पष्टमध्ययुतेरर्द्धात्कार्यं मन्दफलं ग्रहे॥
स्पष्टीकरणयोग्ये च तस्माच्छीघ्रफलं ततः।
तत्रैव त्वेवमसकृदवशेषात् स्फुटग्रहाः॥

इति। केन्द्रशब्देन वृत्तस्य मध्यमुच्यते। तच्चात्र प्रस्तावात् नीचोच्चवृत्तस्यैवातः प्रतिमण्डलपरमोच्चताया मध्यग्रहस्य यदन्तरं

तदिहोच्यते। तत्र मन्दकर्मणि मन्दोच्चं मन्दगति ग्रहस्य शीघ्रगति-रतस्तदन्तरपरिज्ञानाय ग्रहान्मन्दोच्चं शोध्यते। शीघ्रकर्मणि तु शीघ्रोच्चाद् ग्रहो मन्दगतिरतस्तदन्तरपरिज्ञानाय शीघ्रोच्चाद् ग्रहः शोध्यत इति।

अथ ग्रहाणां भुक्तेः स्पष्टत्वातिदेशायोदयास्तवक्रमार्गाणां च निर्दिष्ट-केन्द्रांशेभ्यो हीनाधिकत्वेनानागतातीतकालानयनायार्यामाह।

**कार्यैवं स्फुटभुक्तिस्तृतीयमन्दस्फुटोनशीघ्रगतिः।**
**यातैष्यकलाच्छेदो दिनानि गतिभुक्तभोग्यानि ॥२६॥**

एवमनेन प्रकारेण ग्रहाणां भुक्तिः स्फुटा कार्या। येनैव प्रकारेण ग्रहः स्पष्टः कृतस्तेनैव प्रकारेण तद्भुक्तिरपि स्फुटा कार्या। एतदुक्तं भवति। शीघ्रोच्चभुक्तेर्ग्रहभुक्तिं विशोध्य शीघ्रकेन्द्रभुक्तिं कुर्यात्। ग्रहस्य फलानयने यत् स्पष्टखण्डकं तेन हत्वा भोग्य-गत्या भक्ते लब्धं ग्रहभुक्तेः शीघ्रफलं भवति तदर्द्धीकृत्य धनर्णखण्ड-कोत्पन्नं यथागतं धनमृणं वा ग्रहभुक्तौ संस्कार्यम्। एवमेक कर्मणा ग्रहभुक्तिः स्पष्टा भवति! * तदप्यर्द्धितं स्वकेन्द्रपदक्रमेण यथागतमृणं धनं वा तस्यामेवैककर्मस्फुटभुक्तौ संस्कार्यम्। तस्याः कर्मद्वयस्फुटाया एवमेव मन्दफलमुत्पाद्य तत्सकलमेव मध्यमभुक्तौ यथागतं संस्कार्यम्। एवं कर्मत्रयस्फुटा भुक्तिर्भवति। तां शीघ्रोच्चगतेर्विशोध्य ग्रहशीघ्रफलखण्डकेन हत्वा तद्भोग्यगत्या भजेल्लब्धं फलं तत् सकलमपि तस्यामेव कर्मत्रयस्फुटायां यथागतमृणं धनं वा संस्कार्यम्। एवं कर्मचतुष्टयेन भुक्तिः स्फुटा भवति। यदि च शीघ्रकर्मणि भुक्तिफलमृणगतं भुक्तेः

---

* "ततो यथावन्मन्दगतिफलमानीय" इति पंक्तित्रुटिरिवाभाति।

सकाशान्महद्भवति तदा भुक्तिमेव तस्माच्छोधयेत् शेषं वक्रा पश्चाद्गामिनो ग्रहस्य भुक्तिर्भवति। तस्याश्चेन्मन्दफलमुत्पाद्यते तदा तस्यं धनर्णसंस्कारो वैपरीत्येन विधेय इति।

अत्र वासना। अतीतदिनग्रहस्यैष्यदिनग्रहस्य च यदन्तरं सैव वर्त्तमानदिने दिनभुक्तिर्नान्यः कोऽपि पदार्थ इति यथा ग्रहे फलसंस्कारश्च तथैव भुक्तेरपि युज्यते। ऋणफलस्य च भुक्तेः सकाशादाधिक्ये सति वक्रभुक्तिर्भवति। यतो मध्यमपदस्थिते केन्द्रे भूमध्याच्छीघ्रनीचोच्चवृत्तमध्यं यावदूर्ध्वाधरा कोटिः परमफलज्यातुल्यं शीघ्रनीचोच्चवृत्तव्यासार्द्धं भुजः। पूर्वेणापरेण वा तयोर्वर्गयुतिमूलं तिर्यक् कर्णः। परमफलज्याग्राद्भूमध्यं यावत्। ततस्तस्य कर्णस्य मध्ये शीघ्रनीचोच्चवृत्तखण्डं यावत्प्रविष्टस्तावतो द्विगुणभागा वक्रभागाः। यतो भूस्थस्य द्रष्टुस्तावत्समो ग्रहः परमनीचात्पार्श्वद्वयेऽपि भवति। ग्रहश्चानुलोम्येन शीघ्रनीचोच्चवृत्तमुत्पादयन् प्रतिमण्डलपरिधौ भ्रमति स च तत्र स्थितः प्राग्गतिरपि दृग्भेदात्पश्चाद्गच्छन्नुपलभ्यते। तत्र च भुक्तेर्बहुर्णं फलं भवति। तस्मादुपपन्नं बहृणाद्भुक्तेर्विशोधने वक्रा गतिर्भवति। तृतीयमन्दस्फुटोनेति। तृतीयं यन्मन्दकर्म तेन स्फुटा या ग्रहस्य गतिस्तयोना या शीघ्रोच्चस्य गतिश्चतुर्थकर्मणि या शीघ्रकेन्द्रभुक्तिरित्यर्थः। सा उदयादीनां गतकलानां गम्यकलानां च छेदो भवति। तेन छेदेन गतकलानां गम्यकलानां च भागे हृते तद्गत्यनुसारेण भुक्तानि भोग्यानि च यथासंख्यं दिनानि भवन्त्येतदुक्तं भवति। यस्य ग्रहस्य उदयाद्यन्वेष्टुमिष्यते तमिष्टकाले स्फुटीकृत्य तस्य उदयादौ ये पठिताः शीघ्रकेन्द्रांशास्तत्समैस्तैर्ग्रहस्य तदुदयादि वक्तव्यम्। तेभ्य उक्तेभ्यो यदि हीना अधिका वा केन्द्रांशा भवेयुस्तानुक्तेभ्यो विशोधितेभ्यो वा उक्तान्विशोध्य यथासम्भवं शेषं कलीकुर्यात्ताश्च कलास्तच्छीघ्रकेन्द्रगत्यैव भक्ता दिनत्वं व्रजन्ति। अत्र त्रैराशिकम्। यदि शीघ्रकेन्द्रगतिकलाभिरेको दिवसस्तदैताभिर्गताभिर्गम्याभिर्वा कलाभिः

कियन्त इति लब्धदिनादिना मध्यमग्रहं तात्कालिकीकृत्य स्फुटीकृत्य चान्वेष्टव्यम्। अस्य ये चतुर्थकर्मणि शीघ्रकेन्द्रांशास्ते उदयाद्युक्तानां समा जाता नवेति यदि समास्तदा स एवोदयादिषु कालो हीनाधिकाश्चेत्तदा पुनर्दिनादि तावद्यावत् केन्द्रांशाः पठितैः समा भवन्ति। तत्र काले उदयादयो वाच्या इति। अत्र चापमण्डलवशादुदयास्तावुक्तौ विमण्डलवशात्तु तावुदयास्तौ दृग्गणितसमौ भवतः। तत्कालानयनायोदयास्ताधिकारे वक्ष्यत इति।

इति पण्डित-महादेवात्मज आमशर्मविरचिते खण्डखाद्यकवासनाभाष्ये ग्रहाधिकारो द्वितीयः ॥२॥

अथ त्रिप्रश्नाधिकारो व्याख्यायते। तत्र लग्नकालच्छायोन्नतास्त्रयोऽपि प्रश्ना यथा शास्त्रं सोपपत्तिका निर्णीता अपि गोलज्ञानं विना न मन्दधीभिः प्रतिपत्तुमपि शक्यन्त इति चतुर्वेदपृथूदकस्वामिकृतो गोलबन्धः प्रतिपाद्यते। तद्यथा। समगुरुलघुकाष्ठैर्वंशशलाकाभिर्वा यावत्तावत्प्रमाणं वृत्तत्रयं निर्मापयेत्तत्रैकं पूर्वापरं विधाय द्वितीयं दक्षिणोत्तरमुपर्यधश्च जनितस्वस्तिकं निदध्यात्ततस्तृतीयं वृत्तद्वयस्य बहिः परिकरवद्दिक्चतुष्टयजनितस्वस्तिकं निदध्यात्। वृत्तत्रयेऽपि तथा सन्धानं कुर्याद्यथा सर्वेष्वपि सन्धिष्वेकमिव तद्वृत्तं लक्ष्यते। तत्र पूर्वापरं यद्वृत्तं तत् षष्टिघटिकाङ्कितं कुर्याच्छेषं च वृत्तद्वयं षष्टिशतत्रयभागाङ्कितम्। एतानि विषुवन्मण्डलानि। ततस्तावत्प्रमाणमेवान्यद्वृत्तं षष्टिशतत्रयभागाङ्कितं पूर्वस्वस्तिकेऽपरस्वस्तिके च बहिर्लग्नमुपरिस्वस्तिकाच्च दक्षिणेन दक्षिणोत्तरावगाहिनि वृत्ते चतुर्विंशेऽंशे तिर्यक् सन्दध्यादधः स्वस्तिकाच्चोत्तरेण तस्मिन्नेव वृत्ते चतुर्विंश एवांशे तिर्यगेव सन्दध्यात्तद्राशिचक्रम्। तत्र पूर्वस्वस्तिके मेषादिरपरस्वस्तिके तुलादिरुपरिस्वस्तिकाच्च चतुर्विंशेंऽशे दक्षिणेन नतेन मकरादिरधः स्वस्तिकाच्चोत्तरेण तावतैवोन्नतेन कर्कादिरेवमिदमपमण्डलम्। तथाऽपमण्डलप्रमाणमेवान्यद्वृत्तं तावद्भागान्वितं

मेषादेरारभ्य यावति प्रदेशे विलोमश्चन्द्रपातो वर्त्तते तत्र बद्धा ततोऽर्द्धचक्रान्तरप्रदेशे तथा द्वितीयबन्धनं कार्यं यथा तद्वृत्तार्द्धं प्रथममपमण्डलादुत्तरेण द्वितीयं दक्षिणेन यथा च बन्धाभ्यामुभयतोऽपि नवतितमेंऽशे तस्य वृत्तस्य चापमण्डलस्य चान्तरेऽर्द्धपञ्चमा भागा भवन्ति तद्विमण्डलमुच्यते। एवमियं चन्द्रकक्षा। बुधादीनां तु स्वस्वयोजनकर्णप्रमाणानुपातेन स्वस्वपञ्जराः कार्याः। तेषु च चन्द्रपञ्जराद्बहिर्बुधस्य! बुधाद्बहिः शुक्रस्य। शुक्राद्बहिः सूर्यस्य। सूर्याद्बहिर्भौमस्य। भौमाद्बहिर्गुरोः। गुरोर्बहिः शनेः। तद्बहिरष्टमो भपञ्जरः। सर्वेषामपि पञ्जराणां दक्षिणोत्तरस्वस्तिकयोर्वेधौ कृत्वा तयोरयःशलाकां सुदीर्घां समस्तपञ्जरावभेदिनीमुभयपार्श्वविनिर्गतां दक्षिणोत्तरायतां पञ्जरभारसहां प्रवेशयेदपमण्डलानि सर्वेषां पूर्ववदपमण्डलाच्च विमण्डलानि चन्द्रवदियाँस्तु विशेषः। स्वस्वपठितविक्षेपभागा यथा नवतितमे भागे बन्धाभ्यां अपमण्डलविमण्डलयोरन्तरे भवन्ति तथा विदध्यात्। रविकक्षायां तु विमण्डलं नास्ति। यतस्तद्गत्यविरोधित्वेन सर्वेषामपि ग्रहाणां दक्षिणोत्तरा गतयः कल्पितास्तद्गतिश्चापमण्डल एव। भकक्षायां च प्रतिनक्षत्रं भिन्नो विक्षेपः। पाताभावाच्च स्थिरमेवापमण्डलविमण्डलान्तरम्। तत्र च मेषादीनां क्रान्त्यग्रेषु स्वस्वाहोरात्रवृत्तानि प्रदृश्यानि। स्वस्व विमण्डलापमण्डलान्तरसंस्कृतेषु शेषग्रहाणाञ्च। ततः सर्वकक्षामध्येऽयः शलाकायां भूगोलकाकारा * मृदा सिक्तकेन दारुणा अलाबुना वा प्रदर्श्या। एवं कक्षापरिवेष्टितो भकक्षान्तः तत्र पूर्वस्वस्तिके सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं भुवं भित्त्वाऽपरस्वस्तिके बध्नीयात् तथोपर्यधःस्वस्तिकयोरपि भूभेदि सूत्रं बध्नीयात्ततो भूगोलस्योपरि यत्र सूत्रेण कृतो भेदस्तत्र प्रदेशे लङ्का। यत्राधस्तत्र सिद्धपुरम्। यत्र पूर्वेण भेदस्तत्र यमकोटिर्यत्रापरतस्तत्र रोमकम्। यत्रोत्तरेणायः-

---

* अत्र लेखकदोषवशात् किमप्यशुद्धमिवास्तीति प्रतिभाति।

शलाकाभेदो भूगोले तत्र मेरुर्यत्र च दक्षिणेन तत्र वड़वामुखम् । निर्गतशलाकाग्रयोश्च ध्रुवौ प्रदृश्यौ । लङ्कायमकोटिसिद्धपुररोमकावगाही यो भुवः परिणाहः स सर्वोऽपि निरक्षो देशः । सर्वत्र चिह्नानि कारयेत् । एवमयं गोलो लङ्कायां सम एवावशिष्यते । अथ वा स एवैको भपञ्जरः प्रदर्शसूत्रेणैव सर्वग्रहविशेषः । यतो भिन्नकक्षागता अपि नक्षत्रग्रहा एककक्षागता इवोपलभ्यन्ते । अस्माभिस्तु वस्तुप्रदर्शनं कृतम् । तत्र लङ्कास्थस्य द्रष्टुर्विषुवन्मण्डलमेव सममण्डलं प्राच्यपरम् । यद्द्वितीयं तद्याम्योत्तरम् । यच्च तृतीयं परिकरवत् स्थितं तत् क्षितिजम् तद्देशोन्मण्डलम् । एवं निरक्षदेशेषु सर्वत्र । अत इह न पृथक् प्रदर्शितान्येतानि स्वस्वगोलमण्डलानि । साक्षे च प्रदर्श्यते । तद्यथा । महाप्रमाणं वृत्तचतुष्टयं कृत्वा तत्रैकं पूर्वापरं निदध्यात्तत् सममण्डलम् । द्वितीयं दक्षिणोत्तरावगाहि पूर्ववदुपर्यधोजनितस्वस्तिकं तद्याम्योत्तरम । तृतीयं परिकरवत् तत् क्षितिजम् । चतुर्थं पूर्वापरस्वस्तिकयोर्लग्नं दक्षिणोत्तरयोरक्षाग्रयोश्च । भूगोलोत्तरस्वस्तिकादुपरि स्वदेशाक्षभागतुल्येऽन्तरे याम्योत्तरवृत्ते लग्नं दक्षिणस्वस्तिकाच्चाधस्तत्रैव वृत्ते तावत्येवान्तरे लग्नं तदुन्मण्डलम् । एवमस्मिन् खगोले भूगोलं सकक्षं प्रवेश्योन्मण्डलयाम्योत्तरमण्डलयोः सम्पातयोर्वेधौ कृत्वा तयोरयः शलाकाग्रे प्रवेशयेत्तत् सर्वदेशगोलसंस्थानम् । लङ्कातो याम्योत्तररेखायामामेरोरेतावान् गोलबन्धो व्याख्यात इति । अत्र च स्थिरवृत्तानि चैकपञ्चाशत् । तथा चादित्यप्रतापसिद्धान्ते ।

पूर्वापरमुदग्याम्यं विदिशोर्मण्डलद्वयम् ।
कुजमुन्मण्डलं नाड़ीवृत्तमृक्षनभः सदाम् ॥१॥
निजकक्षाप्रमाणानि स्थिराण्येतानि सप्त च ।
मृदूच्चानामिनादीनां सप्त भौमान्नभः सदाम् ॥२॥
चलोच्चनीचवृत्तानि पञ्चैवं केन्द्रजानि च ।
सप्त दृग्मण्डलानि स्युः सूर्याद्यम्बरसद्मनाम् ॥३॥

दृग्मण्डलं कुजाश्लिष्टं भ्रमति ग्रहसम्मुखम्।
उपर्यधः स्वस्तिकयोः संपृक्तसममण्डलम् ॥४॥
एतदूर्ध्वार्द्धपरिधौ यद्भूस्थैर्दृश्यते ग्रहः।
दृक्क्षेपमण्डलं क्रान्तिवृत्तयाम्योदगाशया ॥५॥
त्रिभोनलग्ने संयुक्तं खमध्ये स्वस्तिकेऽपि च।
दृक्क्षेपमण्डलान्येव अपवृत्तानि सप्त च ॥६॥
चन्द्रादीनां तथा क्षेपमण्डलानि भवन्ति षट्।
चलानि चैकपश्चाशद्वृत्तान्येवं प्रसक्तया ॥७॥
स्वकक्षाप्रमितैरेव समवृत्तादिभिस्त्रिभिः।
खगोलोऽयं स्मृतः साचे तुर्यमुन्मण्डलं भवेत् ॥८॥ इति।

अथ प्रस्तुतमभिधीयते। तत्र त्रयोऽपि प्रश्ना विषुवच्छायामूला स्तदानयनञ्च दिक्साधनं विना ज्ञातुं न शक्यते इति दिक्साधनाय खण्डखाद्यकोत्तरे श्लोकौ।

समभून्यस्तवृत्तान्तःस्थितशङ्कोः प्रभाग्रके।
तुल्ये पूर्वापरे श्रुत्या तत्क्रान्तिज्यान्तरं हतम् ॥१॥
लम्बज्यया भजेल्लब्धेनाङ्गुलाद्येन पूर्वजम्।
अग्रं यथायनं सार्यं ते स्तः पूर्वापराश्रिते ॥२॥

अयमर्थः। समा चासौ भूश्च समभूस्तत्र न्यस्तं तच्च तद्वृत्तञ्च तस्य यदन्तः मध्यं तत्र स्थितः स चासौ शङ्कुः। तस्य ये प्रभाग्रके छायाग्रे तुल्ये समप्रमाणे पूर्वापरे वृत्तप्रवेशनिर्गमसम्बन्धिनी ये गृहीते इत्यध्याहार्यम्। तयोस्तत्कालयोर्यत् क्रान्तिज्यान्तरं तत्तयो-रेव प्रभाग्रयोः श्रुत्या तत्कालच्छायाकर्णेनाहतं लम्बज्यया भजेत्। एतदुक्तं भवति। सलिलसमायामवनाविष्टप्रमाणं वृत्तमालिख्य तन्मध्ये द्वादशाङ्गुलं शङ्कुं न्यसेत्। ततो यावति दिनगते काले छाया वृत्तपरिधिं प्रविशति तं कालं ज्ञात्वा छायाग्रे विन्दुर्देयः।

तावत्येव तु दिनशेषे तत्रस्थस्यैव शङ्कोश्छायाग्रं वृत्तपरिधेर्यत्र बहिर्याति तत्र द्वितीयो बिन्दुर्देयः। तत्र प्राक्कपालस्थे रवौ छायाग्रस्य यो वृत्तपरिधिप्रवेशबिन्दुः साऽपरा दिग् भवति। अपरकपालस्थे चार्के छायाग्रस्य यो वृत्तपरिधिनिर्गमबिन्दुः सा पूर्वा दिग् भवति। परमसौ स्थूला। प्रतिक्षणमर्कयाम्योदग्गतेरन्यथात्वात्। सा च छायाग्रस्य वृत्तप्रवेशनिर्गमकालयोः क्रान्त्यन्तरसंस्कारेण सूक्ष्मा भवति। अतस्तात्कालिकौ स्फुटार्कौ कृत्वा तयोर्वक्ष्यमाणविधिना क्रान्ती एकदिक्के भवतो भिन्नदिक्के चेत्तदा तद्योग एवान्तरमिति। तदन्तरं तयोरेव बिम्बोस्तात्कालिकच्छायाकर्णेन गुणितं सत् स्वदेशलम्बज्यया भजेत्ततो लब्धेनाङ्गुलादिना पूर्वदिग्भवं यच्छायाग्रं यद्यथायनमपसार्यम्। यदि सायनो रविरुत्तरेऽयने तदोत्तरस्यां दिशि दक्षिणे चेद्दक्षिणस्याम्। एवं सति ते छायाग्रे समपूर्वापराश्रिते भवत इति। तयोश्च दिशोर्मत्स्यसमत्स्यवशाद्याम्यसौम्ये दिशौ भवत इति।

अत्र वासना। समभुवि न्यस्तशङ्कोच्छायाग्रं पूर्वाह्णे रवेः प्रागवस्थितत्वादपरस्यां दिशि पतति। अत आद्यो बिन्दुरपरा दिग् भवति। अपराह्णे च रवेः पश्चादवस्थितत्वात्पूर्वस्यां छायाग्रं पतति। तेन सा पूर्वा। बिम्बोः परिधिप्रवेशे निर्गमे च दिनगतशेषकालयोस्तुल्यत्वात्तत्कालिकयोश्छायाकर्णयोरपि समत्वमेवातो बिन्दूपलक्षितप्रदेशयोः पूर्वापरत्वमुपपन्नम्। स्यादेतद्यद्यर्कभोगो विषुवमण्डलगत्या भवेद्यावदर्कोऽपमण्डलगत्या राशीन् भुङ्क्ते। अपमण्डलस्य च तिर्यक्त्वात् क्रान्तिवशेन दिशोर्भेद उपलभ्यते। उत्तरायणे प्रतिक्षणमर्कस्योदग्भ्रमणाच्छायाग्रं दक्षिणेन चलति ततो यावच्चलितं तावदुत्तरेण संचार्यते। येन समपूर्वापरे बिन्दुद्वयं भवति। दक्षिणायने च दक्षिणेनार्कभ्रमणात् छायाग्रमुत्तरेण चलति। यावच्चलितं तावद्दक्षिणेन चाल्यत इति। अत एव दिगैक्येऽन्तरं दिग्भेदे च युतिः कार्येत्युक्तम्। अत एकदिक्के चलने क्रान्त्यन्तरेण

कर्मोपपद्यते भिन्नदिक्के च क्रान्त्योर्योगेनेति। तच्चालनं च निरक्षे छायाग्रवृत्तपरिणतक्रान्तिज्यया। साक्षे च तत्परिणताग्रया युज्यते। यतस्तस्मिन् मण्डले तावदेव व्यासार्द्धम्। ततो विन्द्वन्तरालज-क्रान्त्यन्तरैक्यतुल्यक्रान्तिज्याया अग्राकरणाय प्रथमं त्रैराशिकम्। यदि लम्बज्याकोटेस्त्रिज्या कर्णस्तदास्याः क्रान्तिज्याकोटेः कियन्त इति लब्धमग्रा। सा च क्षितिजस्वाहोरात्रवृत्तसम्पाते पूर्वापरसूत्रेण सह यदन्तरं तद्भवति। तथा च ब्रह्मसिद्धान्ते।

क्षितिजे प्राच्यपराग्रा क्रान्तिस्त्रिज्यागुणाऽवलम्बहृता। इति। अस्याश्छायावृत्तपरिणामनाय द्वितीयं त्रैराशिकम्। यदि त्रिज्यावृत्ते एतावत्यस्तत् छायाकर्णवृत्ते कियतीति। अत्र प्रथमत्रैराशिके त्रिज्यागुणको द्वितीये भाजकस्तयोः समत्वान्नाशे क्रान्तिज्यायाश्छाया-कर्णो गुणको लम्बज्या भाजक इत्युपपन्नम्। यद्वा तत्रस्थ एव शङ्कौ द्वितीयेऽह्नि तथैव विन्दू ग्राह्यौ। तयोस्तुल्यकपालोत्थविन्द्वो-रङ्गुलाद्यन्तरं पूर्वापरचिह्नमध्यनाड्याहतं षष्ट्या भजेल्लब्धं पूर्वापर-विन्द्वोश्चालनम्। तेन चालितौ विन्दू पूर्वापरे भवत इति॥

अथ दिक्साधने कृते विषुवच्छायानयनाय तत्रैव श्लोकौ।

छायाग्रे न्यस्य दिग्मध्ये शङ्कोः प्राच्यपरान्तरे।
अन्योन्यकर्णगुणिते समदिग्विहितान्तरे॥
विदिग्युते कपालैक्ये कर्णान्तरविभाजिते।
फलमङ्गुलरूपं यत् सा भवेद्विषुवत्प्रभा॥२॥

अयमर्थः। शङ्कोर्द्वादशाङ्गुलस्य पृथक् पृथक् द्वे छायाग्रे दिग्मध्ये विन्यस्य ततः शङ्कोः प्राच्यपरयोश्च ये द्वे अन्तरे ते परस्परकर्णगुणिते सती यदि समदिशौ भवतस्तदा विहितान्तरे कार्ये भिन्नदेशौ चेत्तदा युते कार्ये ते च छायाग्रे यदि कपालैक्ये पूर्वस्यामपरस्यां वा भवतः। एवं विधे अन्तरयुतो अन्तरेण भजेल्लब्धं यदङ्गुलादि फलं सा विषुव-च्छाया भवेत्। विषुवति समरात्रिं दिवे काले द्वादशाङ्गुलस्य शङ्को-

मध्याह्ने या प्रभा सा विषुवच्छायेत्येतदुक्तं भवति। सलिलसमाया-मवनौ दिक्साधनं विधायाभीष्टकाले तथा शङ्कुं न्यसेत् यथा दिग्मध्ये छायाग्रं पतति। ततः शङ्कुमूलस्य पूर्वापररेखायाश्च यावदन्तरं अङ्गुलाद्यं तावद् ग्राह्यम्। तत् प्रथमं प्राच्यपरान्तरमुच्यते। तत-स्तस्मिन्नेव कपाले यावदर्कस्तिष्ठति तावत्कियत्यपि काले गते पुन-स्तथैव शङ्कु न्यसेद्यथा प्रथमच्छायाग्रे छायाग्रं पतति। ततः शङ्कुमूलस्य पूर्वापररेखया सह यदन्तरं तद् ग्राह्यम्। तद्द्वितीयं प्राच्यपरान्तर-मुच्यते। तदुभयमपि परस्परच्छायाकर्णाभ्यां गुणयेत् प्रथममन्तरं द्वितीयान्तरच्छायाकर्णेन द्वितीयान्तरं प्रथमान्तरच्छायाकर्णेनेति। तयोर्द्वयोरपि राश्योरेकदिशोरुत्तरस्यां दक्षिणस्यां वा चेत्प्राच्यपरयो-स्तदा तयोरन्तरं कार्यम्। भिन्नदिशोश्च युतिः कार्या। ततस्तदन्तर-मैक्यं वा द्वयोरपि छायाकर्णयोर्विवरेण भजेल्लब्धं अङ्गुलरूपा विषुव च्छाया भवति।

अत्र वासना। प्रथमं यत् शङ्कुमूलप्राच्यपरान्तरं स भुजः। शङ्कुच्छाया च या दिग्मध्यप्रापिणी स कर्णस्तयोर्वर्गान्तरमूलं दिग्रे-खायां पूर्वापरा कोटिरेवं द्वितीयेऽप्यन्तरे योज्यम्। ततो दिग्मध्यात् स्वस्वच्छायानुसारेण द्वयोरपि द्वादशाङ्गुलशङ्कोरुपरि मस्तकप्रापिणौ छायाकर्णौ न्यसेदेवं स्थिते त्रैराशिकम्। यदि प्रथमच्छायाकर्णस्य शङ्कुप्राच्यपरान्तरं भुजस्तदा द्वितीयच्छायाकर्णतुल्यकर्णखण्डकस्य केति। अतो द्वितीयच्छायाकर्णेन प्रथमच्छायाप्राच्यपरान्तरस्य बधः-क्रियते प्रथमच्छायाकर्णश्चाद्यच्छेदस्तस्य वधराशेः फलं च प्रथमच्छाया-कर्णे द्वितीयच्छायाकर्णतुल्यप्रदेशेऽवलम्बितसूत्रस्य प्रथमच्छाया-रेखायाश्च यः सम्पातस्तस्य प्राच्यपरायाश्च तत्र प्रदेशे यावदन्तरं तद्भवति। तत्र चान्तररेखायां द्वितीयं शङ्कुमूलमवतिष्ठते। तस्य च पूर्वापररेखया सह यदन्तरं तज्जातमेव। तच्छङ्कुमूलं पूर्वापरान्तरम् प्रथमच्छायारेखायामन्तरमिति पूर्वापरान्तराद्विशोध्यते येन तयोरन्तरं

सिद्धं भवति। तच्चान्तरं सवर्णनाय तेनाधः स्वच्छेदेन प्रथमच्छायाकर्णेन द्वितीयमन्तरं गुणयित्वा शोध्यते तेनोक्तं समदिग्विहितान्तरे इत्यन्तम्। एवं च यदा तदा शङ्कुमूलद्वयमपि पूर्वापररेखाया उत्तरेण दक्षिणेन वा न्यस्तं भवति। यत उत्तरेणाग्रातुल्योऽर्कोदयकाले भुजस्ततो भपञ्जर-भ्रमणवशात् रवौ पश्चान्मुखं भ्रम्यमाणे तदग्रात्पूर्वापरायतोदयास्त-सूत्रस्य शङ्कुमूलस्य च यद्यदन्तरं तत्तच्छङ्कुतलमुच्यते। ततः प्रतिक्षणं शङ्कुतलेनापचिताऽग्रा भुजो भवति। स्वाहोरात्रवृत्तस्या-क्षवशेन तिर्यक्त्वात्। तदत्र भुजान्तरं शङ्कुतलैकदेशः। अथ दक्षिणेन भुजस्तदा भुजेन प्रतिक्षणमुपचितोत्तराग्रा शङ्कुतलम्। अत्रापि भुजयोरन्तरं शङ्कुतलैकदेश एव। दक्षिणगोले चेदर्क-स्तदाऽग्रा प्रतिक्षणं शङ्कुतलेनोपचिता भुजो भवति। अतस्तत्रा-प्यन्तरं शङ्कुतलैकदेशोऽधिकं दक्षिणेन द्वितीयमुत्तरेण पूर्वापरयोः शङ्कुमूलम्। तदा तयोः सवर्णितयोरेव योगः शङ्कुतलोपचितिः। तत्रापि स शङ्कुतलैकदेशो यतस्तत्र कर्णान्तरव्यासार्धकल्पनया शङ्कुरपि तदनुसारेण च तस्य शङ्कुतलं भवत्येवं स्थिते त्रैराशिकम्। यदि कर्णान्तरतुल्यव्यासार्धवृत्ते एतावच्छङ्कुतलं प्रथमच्छायाकर्ण-च्छेदविवरैक्यतुल्यं तत्प्रथमच्छायाकर्णच्छायाव्यासार्धवृत्ते किय-दिति। अत्र कर्णान्तरव्यासार्धवृत्ते यच्छङ्कुतलं तस्य प्रथम-च्छायाकर्णः स्छेदोऽस्ति। अत्र च त्रैराशिके प्रथमच्छायाकर्णो गुणकस्तयोः समत्वान्नाशे विवरैक्यतुल्यकर्णान्तरव्यासार्धवृत्तशङ्कु-तलस्य कर्णान्तरमेव भाजकः सिद्धः। फलं च प्रथमच्छायाकर्ण-व्यासार्धवृत्ते तदुदयास्तसूत्रशङ्कुमूलयोरन्तरं अङ्गुलरूपं शङ्कुतलं तच्च द्वादशाङ्गुलस्य शङ्कोः सदैव विषुवच्छायातुल्यं भवतीत्युप-पन्नम्।

अथ विषुवच्छायातो भुजसम्बन्धिराशित्रयस्य प्रतिराशि स्वदेशे चरखण्डकानयनमाह।

नवतिथयो१५९ऽष्टि१६विभक्ताः
पञ्चरसा६५ वसु८हृता दश१० त्रि३हृताः ।
विषुवच्छायागुणिताः
स्वदेशजाश्चरदलविनाड्यः ॥१॥

नवतिथय एकोनषष्टिशतं १५९ ते स्वदेशविषुवच्छायागुणिता अष्टिभिः षोडशभिर्विभक्ता लब्धं यत्फलं ता भुजसम्बन्धिप्रथमराशेः स्वदेशीयाश्चरदलविनाड्यो भवन्ति । तथा पञ्चरसाः पञ्चषष्टिः सा स्वदेशविषुवच्छायागुणिता सती वसुभिरष्टभिर्हृता लब्धं यत्फलं ता भुजसम्बन्धिद्वितीयराशेः स्वदेशीयाश्चरदलविनाड्यो भवन्ति । तथा दश स्वदेशविषुवच्छायागुणितास्त्रिहृताः सन्तो भुजसम्बन्धितृतीयराशेः स्वदेशीयाश्चरदलविनाड्यो भवन्ति ।

अत्र वासना । चरति प्रचलति प्रतिदिनं निरक्षात् साक्षे देशे दिनमानमनेन कालेनेति चरम् । यद्वा चरति गच्छति उत्तरगोले दिनं याम्यगोले रात्रिमयं काल इति चरम् । तस्य पूर्वापरविभागेन दलमर्द्धं चरदलम् । तच्च त्रिज्यास्वाहोरात्रवृत्ते क्षितिजोन्मण्डलयोरन्तरं तदुच्यते । तस्य भुजसम्बन्धिराशित्रयस्य प्रतिराशि खण्डकानि पलात्मकानि एकाङ्गुलां विषुवच्छायां प्रकल्प्यात्राचार्येणोत्पादितानि त्रैराशिकेन । तद्यथा । विषुवच्छाया अं १ शंकुः १२ अस्य वर्गः १४४ अनयोर्वर्गयुतिमूलं विषुवत्कर्णः १२।२ अस्माद्वक्ष्यमाण-विषुवत्कर्णविभक्तेत्यादिना लब्धं लम्बज्या १४९।३५ अक्षज्या १२।२८ एकस्य राशेर्वक्ष्यमाणविधिना क्रान्तिचापम् ७०३ अस्माद्वक्ष्यमाणविधिनाज्या ३०।२८ अस्या वर्गं ९२८।१३ त्रिज्यावर्गा २२५०० दपास्य शेषमूलं स्वाहोरात्रविष्कम्भः १४६।५२ क्रान्तिज्या अक्षज्याहता लम्बज्याभक्ता च जाता क्षितिज्या २।३ इयं त्रिज्याहता स्वाहोरात्रार्द्धभक्ता लब्धं चरज्या २।३५ अस्या उक्तविधिना चापम्

५८।३७ षष्ट्या सवर्णितम् $\frac{३५७७}{६०}$ एतत्प्राणात्मकत्वात् षड्भिर्भक्तं जातम् $\frac{३५७७}{३६०}$। अनयो राश्योरासन्नापवर्त्तकेनानेन ४५।२ अपवर्त्तितयोर्जातं नवतिथयो ऽष्टिविभक्ता इति। तत्स्त्रैराशिकम्। यद्येकाङ्गुलविषुवच्छायया भुजसम्बन्धिप्रथमराशेः $\frac{१५८}{१६}$ एतच्चरदलं तदेष्टाङ्गुलायाः किमिति। लब्धं स्वदेशीयभुजसम्बन्धिप्रथमराशेः स्वखण्डकफलानि। अथ राशिद्वयस्य क्रान्तिचापम् १२३८ अस्य ज्या ५२।५२ अस्याः प्राग्वत् स्वाहोरात्रार्द्धम् १४०।२० क्षितिज्या ४।२४ चरज्या ४।४० अस्याश्चापम १०८।२८ अस्मात् प्राक्चापं विशोध्य जातम् ४८।५१ षष्ट्या सवर्णितम् $\frac{२९३१}{६०}$ षड्भिर्भक्ता विनाड्यः $\frac{२९३१}{३६०}$ अनयोरंशच्छेदयोरासन्नापवर्त्तकेन पञ्चचत्वारिंशता ४५- ऽपवर्त्तने जातं पञ्चरसा वसुहृता इति। अतः प्राग्वत् त्रैराशिकेन लब्धं भुजसम्बन्धि द्वितीयराशेश्चरखण्डकफलानि। अथ भुजात्मकराशित्रयस्य क्रान्तिचापम् १४४० अस्य ज्या ६०।५८ अस्याः प्राग्वत् स्वाहोरात्रार्द्धम् १३७।३ क्षितिज्या ५।५ चरज्या ५।३४ अस्याश्चापम् १२८।२८ अस्मात्प्राक्चापं १०८।२८ विशोध्य जातम् २० षष्ट्या सवर्णित जातम् $\frac{१२००}{६०}$ षड्भिर्भक्तम् $\frac{१२००}{३६०}$ विनाड्यः। एतद्विंशत्यधिकशतेनापवर्त्तितं जातं दश त्रिहृता इति। अतः प्राग्वत् त्रैराशिकेन लब्धं भुजसम्बन्धितृतीयराशेश्चरखण्डफलानि। यथेह श्रीमदानन्दपुरे विषुवच्छाया अं ५।२० विषुवत्कर्णः १३।८ अत उक्तविधिना यथाक्रमं जातानि पृथक् पृथक् भुजसम्बन्धिराशित्रितयस्य चरखण्डकानि, ५३।४३।१८ एवमन्यदेशेष्वप्युक्तविधिना स्वदेशीयां विषुवच्छायामुत्पाद्य तयोक्तविधिनैव स्वदेशीयचरखण्डकान्युत्पाद्यानि। एवं स्थूलान्येव भवन्ति शेषाणामुपेक्षितत्वात्। महत्या विषुवच्छायाया महदन्तरं भवति। प्राग्दर्शितैकाङ्गुलच्छायाविधिना तु सूक्ष्माणि भवन्ति।

अथोत्पादितस्वदेशचरखण्डकैरिष्टदिने चरदलानयनमाह ।

चरखण्डानि ज्यावत्
स्फुटसूर्य्याद्राशिना तु भुक्तैक्यम् ।
भोग्येन हताल्लब्धं
राशिकलोप्तास्वरदलविनाड्यः ॥२॥

स्फुटसूर्यात् सायनांशादौदयिकात् स्पष्टरवेर्ज्यावत् भुजीकृतात् यथा ज्यानयने "विषमे भुक्तस्ये"त्यादितिथ्यधिकारोक्तविधिना यत् भुजीकरणं तदपि कार्यमित्यर्थः । तथाविधाद्रवे राशिना चरखण्डकं लभ्यते । अवशेषांशान् षष्ट्या सङ्गुण्याधःस्थकलास्तत्र संयोज्य च या लिप्ता भवन्ति ता भोग्यखण्डकहता राशिकलाभिरष्टादशशतैराप्ता भक्ता यत् फलं तेन सह यद्भुक्तफलैक्यं तदिष्टदिनेन फलरूपं चरदलं भवति । अत्र भोग्यखण्डकेन यथास्थितेनैव शेषकलो गुण्यते न त्वस्य मन्दफलानयनवत् स्फुटीकरणम् । यतोऽत्र त्रैराशिकेन स्वतन्त्राण्येव खण्डकान्युत्पादितानि । अतः खण्डकानां परस्पर-सम्बन्धत्वात् तत्स्फुटीकारस्यावकाशः । अत्र यदि सायनो रवि-र्मेषादिराशिषट्के उत्तरे तु गोलविभागे वर्त्तते तदा तच्चरदल-मुत्तरं वाच्यम् । यदि च तुलादिराशिषट्के दक्षिणे तदा दक्षिण-मिति ।

अत्र वासना । चरार्द्धस्य त्रीणि खण्डकानि पृथग्राशित्रये उत्पा-दितानि । अतस्तदानयने राशिनैव भुक्तखण्डकलब्धिः । शेषकलाभि-स्त्रैराशिकम् । यदि राशिकलाभिर्भोग्यखण्डकं तच्छेषकलाभिः कियदिति । लब्धं तु भुक्तखण्डकैक्ये योजितम् । इष्टदिने चरदलं भवति । तच्च सायने रवौ मेषादिराशित्रये वर्त्तमाने उपचीयते यावन्मिथुनान्ते परमं खण्डकत्रयैक्यतुल्यं भवति । तत्र क्षितिजोन्मण्डलयोः परमप्रकर्षत्वात् । ततः कर्कादिराशित्रये-

ऽपचीयते। यावत्कन्यान्ते तावत्तत्र चितिजोन्मण्डलयोरेकत्वात्। तुलादिषट्केऽप्येवम्। तुलादिराशित्रये उपचयो यावद्धनुरन्ते ततो मकरादिराशित्रयेऽपचयो यावन्मीनान्तेऽभावोऽतो भुजोक्तताद्यरमुत्पाद्य मिति।

अथ प्रागुक्तसौरसावनाहर्गणेन ये ग्रहा आनीतास्ते लङ्कायामार्धरात्रिकास्ते च सपार्धभुक्तौ धनं कृतायामागामिदिनौदयिका भवन्ति ऋणं कृतायां च प्रागस्तकालिकाः। ते च देशान्तरफलसंस्कारेण स्वदेशसमदक्षिणेन यो निरक्षो देशस्तदौदयिकास्तात्कालिकास्ते च रविचरदलफलसंस्कारेण स्वदेशार्कोदयास्तकालिका भवन्ति तदर्थमार्यामाह।

**चरदलविनाडिकागति-**

**कलावधात् खखरसाग्नि३६००लब्धकलाः।**

**ऋणमुदयेऽस्तमयेधन-**

**मुत्तरगोलेऽन्यथा याम्ये ॥३॥**

चरदलविनाडिकाश्च गतिकलाश्च तासां यो वधो गुणनं तस्मात् खखरसाग्निभिः षट्त्रिंशच्छतैर्भागे हृते लब्धा या कलास्ता उदये सूर्योदयकालिकानां ग्रहाणां ऋणं कार्याः। अस्तकालिकानां च धनं यद्युत्तरगोले मेषादिराशिषट्कस्थे सायनरवौ चरदलमुत्पन्नं भवेद्याम्यगोले तु तुलादिराशिषट्के सायने रवावन्यथा त्वौदयिकग्रहाणां धनमस्तकालिकानामृणमिति। एवं सति स्वदेशसूर्योदयास्तकालिका ग्रहा भवन्ति।

अत्र वासना। उत्तरे तु गोलार्द्धे स्वदेशजादुपर्युन्मण्डलार्कोदयकालिको ग्रहो भवति। तत्र च काले चरदलघटिकातुल्याः स्वदिनस्य गता घटिका भवन्ति। अतस्तात्कालिको ग्रहश्चरदलविनाडिकाफलेनापचितः स्वदेशरव्युदयकालिको भवति। तत्र च

काले फलं च त्रैराशिकेन। यदि षष्टिघटिकाविनाडिकाभिः षट्त्रिंशत्कृतैर्ग्रहः स्वगतितुल्याः कलाः प्राप्याति तच्चरदलविनाडिकाभिः कियतीरिति। फलं कलादि। एवमस्तकालिको ग्रह उन्मण्डलार्कास्तकालिक एव। तत्र च काले चरदलविनाडिकातुल्याः स्वदेशे दिनशेषनाडिकाः सन्ति। अतस्तत्फलेनोपचितो ग्रहः स्वदेशार्कास्तकालिको भवति। याम्ये तु गोलार्द्धे वैपरीत्येनोदयास्तयोः फलसंस्कारः कार्यः। तत्र स्वक्षितिजादधःस्थत्वादुन्मण्डलस्येत्येतेनोदयास्ताभ्यामन्यत्र काले मध्याह्नेऽर्द्धरात्रे च ग्रहाणां चरदलसंस्कारो न कार्य इत्युक्तं भवत्येतत्सर्वं यथास्थितं गोले प्रदर्शयेदिति।

अथेष्टदिने तद्दैवसिकस्वदेशचरार्द्धाद्रात्रिदिनप्रमाणानयनमाह।

**पञ्चदशहीनयुक्ताश्चरार्द्धनाडीभिरुत्तरे गोले।**
**याम्ये युक्तविहीना द्विसंगुणा रात्रिदिननाड्यः॥४॥**

पञ्चदशघटिकाः स्थानद्वयस्थास्तद्दिनचरार्द्धघटिकाभिरेकत्र हीना द्वितीयस्थाने युक्ताः कार्याः। उभयत्रापि द्वाभ्यां गुणिता यथाक्रमं रात्रिदिननाड्यो भवन्ति। उत्तरे गोले मेषादिराशिषट्कस्थे सायने रवौ यत्र हीनास्तत्र रात्रिनाड्यो यत्र युक्तास्तत्र दिननाड्य इत्यर्थः। याम्ये तु गोले तुलादिराशिषट्कगे सायनेऽर्के पञ्चदशघटिकाश्चरार्द्धनाडीभिर्युक्तविहीनाः सत्यो द्विगुणा यथाक्रमं रात्रिदिननाड्यो भवन्ति। यत्र युक्तास्तत्र रात्रिनाड्यो यत्र हीनास्तत्र दिननाड्य इत्यर्थः। अत्र चरार्द्धं विनाडिकात्मकं षष्ट्या विभज्याचार्येण चरार्द्धनाडीभिरित्युक्तम्। स्वाहोरात्रचतुर्भागस्य पञ्चदशघटिकात्मकस्य स्थितत्वादिति।

अत्र वासना। इष्टदिने स्वाहोरात्रवृत्तं षष्टिघटिकाङ्कितं कृत्वा समभागैश्चतुर्भिश्चिह्नयेत्तत्रैकस्मिन् वृत्तपादे पञ्चदश घटिका भवन्ति तत्र याम्योत्तरवृत्तस्वाहोरात्रवृत्तसम्पातादुभयतोऽपि प्राग-

परयोरुन्मण्डलेन सह स्वाहोरात्रवृत्तसम्पातौ पञ्चदशघटिकावच्छिन्नौ भवतो निरक्षदेशे । साक्षे तूदयास्तमययोरुन्मण्डलात् क्षितिजस्यान्यत्वादुत्तरगोले उन्मण्डलादधः क्षितिजे रविमुद्यन्तं भूस्थाः पश्यन्ति। तस्मात् प्राक् चरदलघटिकाभिरधिकाः पञ्चदशघटिका दिनार्द्धं भवति । क्षितिजोन्मण्डलयोर्यत्स्वाहोरात्रवृत्ते त्रिज्यापरिणतेऽन्तरं तद्धि चरदलं पश्चादप्युन्मण्डलादधः क्षितिजेऽस्तं यान्तं रविं भूस्थाः पश्यन्ति। तस्मात्तत्रापि स्वाहोरात्रखण्डेन चरदलाख्येनोपचिताः पञ्चदश घटिका दिनार्द्धत्वं भजन्ते । ततो द्विगुणं दिनार्द्धमेव दिनप्रमाणम् । शेषाश्च स्वाहोरात्रवृत्तघटिका रात्रिप्रमाणम्। यतस्तद्वृत्तार्द्धं उभयतोऽपि चरदलतुल्यकालेन खण्डितं तिष्ठति तदर्द्धं द्विगुणं रात्रिमानम् । अत एव द्विगुणचरार्द्धं त्रिंशतो विशोध्य शेषा रात्रिमानघटिका भवन्ति उत्तर गोले । याम्ये तून्मण्डलस्य क्षितिजादधःस्थत्वात्सर्वं वैपरीत्येन योज्यम् । निरक्षे तु क्षितिजोन्मलयोरेकत्वात् चरदलाभावस्ततश्च निरक्षादुत्तरेण तावच्चरार्द्धमुपचीयते यावत्पञ्चदश घटिकास्ततस्तत्र रात्रेरभावः । षष्टिघठिकाप्रमाणञ्च दिनं परमम् । एतच्च तत्र सम्भवति यत्र षट्षष्टिरक्षांशाः परतस्तावदुपचीयते यावन्मेरुस्तत्र षड्भिर्मासैर्दिनं षड्भिश्च रात्रिरेवं निरक्षाद्दक्षिणेनापि योज्यम्। यावद्वाडवे षड्भिर्मासैर्दिनम् । षड्भिश्च रात्रिरिति ।

अथ निरक्षदेशे मेषादिराशीनामुदयकालप्रमाणं तस्माच्च साक्षदेशोदयकालप्रमाणमार्ययाह ।

लङ्कोदया विनाड्यो
वसुभानि२७८ च्छिद्रनवयमा२९९स्त्रिरदाः३२३ ।
खचरार्द्धौना व्यस्ता
व्यस्तयुताः स्वोदयविनाड्यः ॥५॥

वसुभान्यष्टसप्तत्यधिकशतद्वयं छिद्रनवयमा एकोनशतत्रयं त्रिरदास्त्रयोर्विंशत्यधिकशतत्रयं एते त्रयो राशयो यथाक्रमं क्रमोत्क्रमाभ्यां मेषादिराशीनां लङ्कोपलक्षितनिरक्षदेशे पलात्मका उदया भवन्ति। साक्षदेशे च एत एव त्रय उदयाः प्रागानीतस्वचरार्द्धखण्डकत्रयेण यथाक्रममूनाःसन्तः स्वदेशे मेषादिराशित्रयस्योदया भवन्ति। तथैत एव लङ्कोदया व्यस्ता उत्क्रमन्यस्ता व्यस्तैरुत्क्रमन्यस्तैः स्वदेशचरखण्डकैर्युताः सन्तः स्वदेशे कर्क्यादिराशित्रयाणां स्वोदया भवन्ति। तुलादिषट्कस्य त्वेत एव षट् विपर्यस्ताः स्वोदया भवन्ति। यः कन्याया उदयः स तुलायाश्च यः सिंहस्य स वृश्चिकस्येत्येवं सर्वत्र। यावन्मेषमीनयोर्वृषकुम्भयोर्मिथुनमकरयोः कर्किधनुषोः सिंहवृश्चिकयोः कन्यातुलयोरेकैकसदृश एव स्वदेशोदयः। निरक्षे तु मेषकन्यातुलामीनानां वृषसिंहवृश्चिककुम्भानां मिथुनकर्किधनुर्मकराणां चतुर्णां राशीनां यथाक्रममेकैकसदृश एवोदयो भवति।

अत्र वासना। तत्र लङ्कोदयोत्पत्तिकर्मक्रमस्तावदुच्यते। तद्यथा ब्रह्मसिद्धान्ते,—

ज्यावर्गात्तत्क्रान्तिज्यावर्गोनात् पदाहता त्रिज्या।
स्वाहोरात्रार्द्धहृताश्चापाश्चापान्तराण्यस्य॥

तत्र मेषराशिज्या ७५ वृषज्या १३० मिथुनज्या १५० मेषक्रान्तिज्या ३०।२८ वृषक्रान्तिज्या ५२।५२ मिथुनक्रान्तिज्या ६०।५८ आभ्यश्चरखण्डकोत्पत्तिर्दर्शितविधिना। स्वाहोरात्राणि मेषस्य १४६।५२ वृषस्य १४०।२० मिथुनस्य १३७।३ एतेषु व्यासत्रयम्। तत्रैकराशिज्या तिर्यक्कर्णः। क्रान्तिज्या याम्योत्तरा भुजः। अनयोर्वर्गान्तरमूलं स्वाहोरात्रे ऊर्द्धाधरा कोटिः। सा च मेषज्यावृत्ते ६८।३२ वृषज्यावृत्ते ११८।५५ मिथुनज्यावृत्ते १३७।३ एतास्त्रिज्यागुणाः स्वस्वाहोरात्रार्द्धभक्ता जातास्त्रिज्यास्वाहोरात्रार्द्धवृत्ते ऊर्द्धाः कोटयो

ज्यारूपा:। मेषस्य ७० वृषस्य १२६।५२ मिथुनस्य त्रिज्यैव १५० आसां चापानि प्राणाः १६७०।३४६६।५४०० एतानि अधोविशुद्धानि १६७०।१७९६।१९३४ एतएव बालैरुद्घुष्यन्ते।

खागाष्टय: १६७० खग्नवशैलचन्द्रा: १७९६
पयोधिरामाङ्कनिशाधिनाथा: १९३४।
क्रमोत्क्रमात्ते स्युरजादिकानां
प्राणा निरक्षक्षितिजोदयस्य ॥१॥

एवं प्राणात्मकात् षड्भिर्भागे हृते जाता: पलात्मका निरक्षोदया यथा पतिताः २७८।२९९।३२३ इति।

अत्र वासना। निरक्षदेशे क्षितिजोन्मण्डलयोरेकत्वात् विषुवमण्डलादुत्तरतो मेषवृषमिथुनानां क्रान्त्यग्रेषु स्वाहोरात्रवृत्तानि त्रीणि बध्नीयात्तान्येवोत्क्रमेण कर्कादीनाम्। एवं दक्षिणेनापि तुलादीनां त्रयाणां क्रान्तग्रेषु त्रीणि वृत्तानि बध्नीयात्तान्येवोत्क्रमेण मकरादीनाम्। ततो मेषान्ते मेषज्यातुल्यव्यासार्द्धेन वृत्तं भगोलमध्ये याम्योत्तरावगाहि बध्नीयात्तस्य च मध्यं भूमध्यविनिर्गतक्षितिजप्रापि पूर्वापरायतसूत्रे भवति। तद्वत् वृषज्याव्यासार्द्धेनान्यद्बध्नीयात्। मिथुनज्यया च व्यासार्द्धतुल्यया याम्योत्तरवृत्तं तिष्ठत्येव। एवं वृत्तत्रयेऽपि स्वस्वजीवा तिर्यक्कर्ण:। स्वस्वक्रान्तिज्या दक्षिणोत्तरायता भुज:। तद्वर्गान्तरमूलं चोर्द्धाधरा कोटि: स्वाहोरात्रवृत्ते। सा च त्रैराशिकेन। यदि स्वाहोरात्रवृत्ते एतावती कोटिस्तदा त्रिज्यावृत्ते कियतीति लब्धा: कोटयो ज्यारूपास्तासां चापानि प्राणास्ते च पृथक् पृथक् राशिप्रमाणजिज्ञासयाऽधोविशुद्धा: कार्या:। षड्भक्ताश्च पलात्मका लङ्कोदया भवन्ति। लङ्काग्रहणं चोपलक्षणार्थम्। सर्वत्रैव निरक्षदेशे लङ्कायमकोटि

सिद्धपुररोमकावभेदिपूर्वापरसूत्ररेखयोरेत एवोदया भवन्ति। साचे तु देशे चितिजोन्मण्डलयोरन्यत्वं तिर्यक्त्वं चाचवशाद्विषुव-मण्डलस्य। तद्वशेन स्वाहोरात्रवृत्तानामतो मेषादीनां त्रयाणां या लङ्कोदयकलाः प्राक् प्रदर्शितास्ताः स्वचरज्यया अपचीयन्ते। तद्वशाच्च चापानामप्यपचयो भवत्यतः स्वकीयैश्चरखण्डकैर्मेष-वृषमिथुनानां निरक्षोदयकला हीनाः क्रियन्ते। यावद्विषुवन्मण्डल-पादस्योदयतश्चरार्द्धखण्डकतुल्यं खण्डमनुदितं तिष्ठति तावदयं मण्डलपादः सकलोऽप्युदेति। विषुवन्मण्डलप्रथमपादावमानं स्वाहोरात्रप्रथमपादावशेषस्य द्वितीयपादेन सहितस्योदयतो यावान् कालस्तावान् द्वितीयस्यापमण्डलपादस्य। यथा चापचय-स्तथैवोपचयोऽप्यतः कर्क्यादिराशित्रयोदयकालस्य व्यस्तन्यस्तस्य व्यस्तन्यस्तचरखण्डकयोग उपपद्यते। तृतीयपादस्य द्वितीय-पादवत्। चतुर्थपादस्य प्रथमपादवद्वासना। यतोऽक्षवशेन चापमण्डलस्य तिर्यक्कमतस्त्रिज्यास्वाहोरात्रवृत्ते परिणाम्यते। यतस्त्रिज्यावृत्ते चापान्युपनिबद्धानि। अत्र त्रैराशिकं त्यक्तम्। सर्वमेतत् मकरादिषट्कमुत्तरायतमतः स्वल्पेन कालेनोदयं याति। कर्क्यादिषट्कं च प्रागायतमत ऋजुत्वाच्चिरकाले-नोदयते। अतो निरक्षोदयेभ्यश्चरखण्डानां यथा स्वमपचयो-पचयौ क्रियेते। ततः स्वदेशोदया भवन्ति। अस्तकाले-चामीषां प्रत्येकं वैपरीत्यम्। यतो ये प्रागायतोदयास्ते उदगायताः सन्तो ऽस्तं प्रयान्ति। ये च सौम्यायतोदयास्तेपरायताः सन्तो ऽस्तं प्रयान्त्यतो येनैव चरखण्डकेनापचितानां निरक्षोदयानां पूर्वक्षितिजे स्वदेशोदयास्तेनैवोपचितानां पश्चात् चितिजे स्वदेशे ऽस्तम्। येनैव चोपचितानामुदयस्तेनैवापचितानामस्तम। विषुवन्मण्डलापमण्डल-स्वाहोरात्राणां तिर्यक्त्वादेव। ते च मेषादीनामुदयाः श्रीमदानन्द-पुरीया बालेन्दुद्युष्मन्ते।

पञ्चाश्विदस्राः२२५ रसबाणबाहव: २५६
शराभ्ररामाः३०५ शशिवेदवह्नय: ३४१।
द्विवेदरामाः ३४२ शशिरामरामा ३३१
मेषादितस्तौलित उत्क्रमेण ॥१॥

इति।

अथेष्टकालात्स्वोदयैर्वर्त्तमानलग्नानयनं लग्नाच्च कालानयनमाह।

**इष्टघटिकाभिरुदयैरनुपाताद्वर्द्धितो रविर्लग्नम्।**
**अनुपातवर्द्धितेऽर्के लग्नसमे स्वोदयैर्घटिकाः ॥६॥**

इष्टघटिकाभिः स्वदेशोदयैश्चानुपातादनुपतन्त्यनुगच्छन्ति गणका अस्मिन्नित्यनुपातस्त्रैराशिकम्। तस्मात्सायनो रविर्वर्द्धितः सन् लग्नं भवत्येतदुक्तंभवति। यस्मिन् दिनेऽभीष्टदिनगतकाले लग्नं कर्त्तुमिष्यते तत्रौदयिक स्पष्टरविमानीय तात्कालिकं कुर्यात्। तत्र त्रैराशिकम्। यदि घटीनां षष्ठ्या रवेः स्पष्टभुक्तिर्भवति तदेताभिरभीष्टघटिकाभिः किमिति। लब्धकलादिफलयुतो रविस्तात्कालिको भवति। तस्मिंश्च वक्ष्यमाणोत्तरविधिनोत्पन्नायनांशान् दत्वा तं वामतः संस्थाप्य दक्षिणतश्च स्वदेशोदयान्। ततो रविणा वर्त्तमानराशेर्यद् भुक्तं भागादि तस्य त्रैराशिकेन कालमुत्पादयेत्। यदि त्रिंशतांऽशैर्वर्त्तमानराश्युदयो लभ्यते तदनेन भुक्तांशादिना किमिति। लब्धं फलानि। तान्यभीष्टकालात् पलीकृतात् शोधयेत्। शेषमनष्ट कार्यम्। यच्चाभुक्तमंशादि तद्रवौ योज्यम् यथाऽसौ राशिस्थानादधः शून्यं भवति। ततोऽनष्टात्पलराशेर्भोग्या ये उदयाः शुध्यन्ति तान् शोधयेत्। तावतश्च राशीन् रवौ दद्यात्। शेषेण च त्रैराशिकम्। यद्यशुद्धोदयपलैस्त्रिंशदंशा भवन्ति तदेतेनेष्टकालशेषेण किमिति। लब्धमंशादि च रवौ दद्यादेवं वर्द्धितो यो रविः स लग्नं भवति। तस्माच्च येऽयनांशा दत्तास्तान् शोधयेत्। तथा च प्रद्योतनसिद्धान्ते।

अयनलवान्वितसूर्यादिष्टे काले प्रसाध्यते लग्नम् ।
पश्चादायनभागैर्विवर्जितं जायते स्पष्टम् ॥

भास्करसिद्धान्तेऽपि । युक्तं तनुः स्यादयनांशहीनमति । एवं दिवागते काले लग्नमानयेद्रात्रौ तु तात्कालिकार्कात् षड्राशियुताल्लग्नानयनं कार्यम् । सूर्योदयात्प्रभृति दिनान्ते षण्णां राशीनामुदितत्वात् । दिवाशेषरात्रिशेषकालयोस्तु षड्राशियुक्तात् तात्कालिकार्कात् प्राग्विधिना रविभुक्तादंशादेः कालफलमुत्पाद्यं तद्व्यस्तं कार्यम् । राशिभोग्यकलाल्पस्य तदिष्टकालत्वे स्वधियाऽप्यूहयेदेतदेवोत्तरश्लोकैरुक्तम् ।

इष्टकालिकसूर्यस्य रात्रौ षड्भाधिकस्य तु ।
सायनांशस्य भोग्यांशान् स्वोदयघ्नान् खवह्निभिः ॥१॥
लब्धानिष्योदयांश्चैव शोधयेदिष्टकालतः ।
भोग्यांशान्योजयेत्सूर्ये तावद्राशींश्च निक्षिपेत् ॥२॥
शेषं त्रिंशद्गुणं चांशाद्यशुद्धोदयभाजितम् ।
अयनांशान् विशोध्यास्माल्लग्नं तात्कालिकं भवेत् ॥३॥

अत्र वासना । अपमण्डलस्योदयतो यत्र प्रदेशे क्षितिजेन सहासक्तिस्तस्य प्रदेशस्य पूर्वाचार्यैर्लग्नसंज्ञा कृता । तदत्रार्कोदयकालेऽपमण्डले यत्र रविस्तत्रैव लग्नम् । रविरपि तत्र काले क्षितिजासक्तस्ततो यथा यथाऽर्कः क्षितिजाद्विप्रकृष्टो भवति तथा तथाऽर्कक्षितिजान्तरस्थितेनापमण्डलखण्डेनोपचितो रविर्लग्नभोगप्रदेशो भवति । स च त्रैराशिकेनैव । यत्र राशौ रविस्तत्र यद्रविणा भुक्तं तद्रवेः प्रथममेवोदेति यच्चाभुक्तं रवेरग्रतः स्थितं भागादि तत्कियता कालेनोदेति तदर्थं त्रैराशिकम् । यदि त्रिंशतांऽशैः स्वोदयपलानि भवन्ति तदैतेन राशिभोग्येनांशादिना कियन्तीति लब्धफलैस्तस्य राशिशेषस्योदयो भवत्यतोऽभीष्टकालात्पलात्मकाल्लब्धफलानि शोध्यन्ते । सूर्येऽपिराश्यभुक्तं दीयते । येन तदधिको लग्न-

भोग; संगृहीतो भवति। ततः प्रश्नकालशेषपलेभ्योऽनन्तरराश्युदया यावन्तः शुद्ध्यन्ति तावन्तो राशयोऽपममण्डलस्य तत्काले उदिता भवन्ति। अत्र तावन्तो राशयो रवौ चिप्यन्ते येन तावान् लग्नभोगः संगृहीतो भवति। यस्य च राशेरुदयपलानि न शुद्ध्यन्ति स राशिरशुद्धन् वर्त्तते तदुदितभागाद्यवगमाय पुनस्त्रैराशिकेन शेषपलेभ्यो लब्धभागादि रवौ दीयते। येन चितिजासन्नार्काक्रान्तप्रदेशयोरन्तरगमपमण्डलखण्डं संगृहीतं भवति। एतच्चार्केण तात्कालिकेन कर्म। यतः सावनाहोरात्रस्य षष्ट्यंशो घटिका न नाचत्रस्य। रवेर्गतिमत्त्वादेकदिनभोगोत्थप्राणैरधिका नाचत्रः षष्टिर्घटिकाः सावनाहोरात्रे भवन्ति। तस्मादूतिथिकरणग्रहलग्नच्छायादिषु सावनघटिकाभिरेव व्यवहारोऽतोऽर्कस्य तात्कालिकीकरणमुपपन्नम्। अयनांशाश्च स्वाहोरात्रवृत्तस्य याम्योत्तरगत्या क्रान्तिवशेन चलितस्य तत्रस्थकालावगमायैव दीयन्ते। अपममण्डलस्य तु चितिजासन्निर्यथास्थितैव केवलं स्वाहोरात्रचलनवशेन तत्रस्थमपि स्वल्पचलनमुत्पद्यत एवेति। तथाऽनुपातेन स्वोदयैर्वर्द्धितेऽर्के लग्नसमे जाते सति इष्टलग्नस्य घटिका भवन्ति। अयमर्थः। यदेष्टलग्नमुद्दिश्य कश्चित्कालं पृच्छति तदा तद्दिनौदयिकं रविमुक्तविधिना स्फुटीकृत्य तस्मिंश्चायनांशान् दत्त्वा तस्य सायनार्कस्य वर्त्तमानस्य राशेर्भुक्तांशादि त्रिंशतो विशोध्य भोग्यमंशादि ग्राह्यम्। तेन च त्रैराशिकम्। यदि त्रिंशतांऽशानां वर्त्तमानराश्युदयपलानि भवन्ति तदनेन भोग्येनांशादिना किमिति। लब्धपलानि अनष्टानि कार्याणि। भोग्यं चांशादि रवौ दद्याद्यथा राशिस्थानादधः शून्यं भवति। ततः सायनेष्टलग्नस्य राश्यात्मकरवेश्चान्तरे यावन्तो राशयो विद्यन्ते तावतां स्वोदया अनष्टफलैः संयोज्या राशयश्च रवौ देयाः। यच्च सायनलग्नस्य राशिस्थानादधोंऽशादि तिष्ठति तेन त्रैराशिकम्। यदि त्रिंशतांऽशानां वर्त्तमानराश्युदयो भवति तदनेन सायनलग्नस्यांशादिना

किमिति। लब्धपलानि पलसमुच्चये योज्यानि। अंशादि च रवौ दद्यादेवं लग्नसमेऽर्के जाते इष्टलग्नकालस्य पलानि भवन्ति। तानि षष्टिभक्तानीष्टलग्नस्य तद्दिनगता घटिका भवन्ति। परं ताः स्थूलास्तात्कालिकार्कापरिज्ञानादतो लब्धघटिकाभिरर्कं तात्कालिकीकृत्य पुनरेवं कालं साधयेत् यावत्स्थिरा भवति। स स्फुटो दिनगत इष्टलग्नस्य कालो भवति। एवमन्यकालेष्वपि स्वधियाऽप्यूह्यम्। वासनाऽप्यत्र लग्नानयनवैपरीत्येन स्पष्टैव। एतदेवोत्तरे श्लोकाभ्यामुक्तम्।

सायनांशकलग्नार्कभुक्तभोग्यांशकान् हरेत्।
स्वोदयघ्नान् खहांशैश्च लब्धैक्यं सान्तरोदयम् ॥१॥
एवं तात्कालिकादित्यादसकृत् लग्नसाधनम।
प्रवृत्तिं निक्षिपेत्तत्र कालो दिननिशोर्गतः ॥२॥

प्रवृत्तिश्च नवांशविभाग इति पूर्वसूरयः। शेषं स्पष्टम् ॥

अथ भुजीकृतस्य राशे राश्यर्द्धस्य राश्यर्द्धस्य पृथक् पृथक् चापादीनामर्द्धज्याखण्डानि षट् प्रतिपादयितुमिष्टज्यां साधयितुं चार्यामाह।

त्रिंशन्नवरसेन्दु-
जिनतिथिविषया ३९।३६।३१।२४।१५।५ ग्रहार्द्धचापानाम्
अर्द्धज्याखण्डानि
ज्याभुक्तैक्यं सभोग्यफलम् ॥८॥

नव च रसाश्च इन्दुश्च नवरसेन्दवस्तैः सह वर्त्तन्ते एवंविधाः पृथक् त्रिंशत् जिनतिथिविषयाश्च एतानि षट् राश्यर्द्धस्य खण्डकानि।

तत्र प्रथमराश्यर्द्धस्य सनवत्रिंशदेकोनचत्वारिंशत् अर्द्धज्या। द्वितीय-राश्यर्द्धस्य सरसत्रिंशत् षट्त्रिंशत् * "तृतीयराश्यर्द्धस्य सेन्दुत्रिंशत् एकत्रिंशत्। चतुर्थराश्यर्द्धस्य जिनाश्चतुर्विंशतिः। पञ्चमराश्यर्द्धस्य तिथयः पञ्चदश। ष"ष्ठस्य विषयाः पञ्च। एवं षणणां चापार्द्धानां षडर्द्धज्या भवन्ति। एतैः षड्भिः खण्डकैः भुक्तफलैक्यं भोग्यफल-सहितमिष्टा ज्या भवति। अयमर्थः। भुजीकृतराश्यादिकं कला-पिण्डं विधाय नवशत्या भजेल्लब्ध * भोग्यखण्डकफलं भवति। तद्भुक्तखण्डकैक्येनयुतमिष्टज्या भवति।

अत्र वासना। तत्र तावत् खण्डकोत्पत्तिः। सलिलसमी-कृतायामवनौ व्यासार्द्धाङ्गुलप्रमाणकर्कटकेन वृत्तमभिलिख्य दिग-ङ्कितं द्वादशभागाङ्कितं च विदध्यात्। तस्य षडंशो भागद्वयम्। ततो दिग्रेखां मध्ये विधाय तदुभयाग्रसक्तं सूत्रं दक्षिणोत्तरायतं प्रागपरायतं च ज्यासंस्थानार्थं प्रसार्यम्। तदवश्यं व्यासार्द्धतुल्यं जायते। तस्यार्द्धं दक्षिणोत्तररेखावच्छिन्नं प्रागपररेखावच्छिन्नं च राशिज्या तदेवं सकला त्रिराशिज्योच्यते। तच्च व्यासार्द्धमुच्यते। तथात्र तत्कल्पितम् १५० अथास्मादन्येषामुत्पत्तिः। अस्यदलं ७५ इयमेकराशिज्या। † अस्या वर्गः ५६२५। ४"त्रिज्यावर्गः २२५००" अनयोरन्तरम् १६८७५ अस्मान्मूलं द्विराशिज्या १३०। एषा चतुर्थी ज्या अस्यास्त्रिज्यायाश्च विवरम् २० एष शरः प्रथमज्यायां जायते। त्रिज्याकृतिः २२५०० अस्या दलम् ११२५० अतो

* " — " कोष्ठकावर्जिता पंक्तिर्मूलपुस्तके नास्ति।

* "सम गतखण्डकं भवति। शेषेगोष्यखण्ड सङ्गुण्य नवशत्या भजेल्लब्धं" इयं पंक्ति-स्त्रुटिरिवाभाति।

† "सा च द्वितीयज्या"। इति त्रुटिरिवाभाति।

४ " — " इयं पङ्क्तिर्मूलपुस्तके नास्ति।

मूलम् १०६ इयं तृतीया ज्या। अथ शरकृतिः ४०० राशिज्याकृतिः ५६२५ अनयोर्युतिः ६०२५ अस्या मूलम् ७८ अस्य दलम् ३९ इयं प्रथमज्या। अस्यावर्गः १५२१ त्रिज्यावर्गः २२५०० अनयोर्विशेषः २०९७९ अस्मान्मूलं पञ्चमी ज्या १४५ षष्ठी ज्या त्रिज्यैव। एताः क्रमेणज्याः ७५, १०६, १३०, १४५, १५० एता अधो विशुद्धा जातानि यथा पठितानि खण्डानि ३९, ३६, ३१, २४, १५,५।

अथैषामुत्पत्तिः। परिधेः षड्भागस्य या ज्या सा तावद्व्यासार्द्धतुल्यैव जायते। ततो द्विराशिज्याया अर्द्धमवश्यमेकराशिज्यार्द्धं भवति स भुजः प्रकल्प्यस्ततोऽस्य व्यासार्द्धं कर्णस्तयोर्वर्गान्तरमूलं कोटिर्जायते। सा तत्पदशेषस्य राशिद्वयप्रमाणस्य ज्यार्द्धरूपतयाऽवतिष्ठते ताञ्च कोटिव्यासार्द्धादपास्य शेषं शरः प्रथमज्याया भुजरूपायाः कोटिरूपः। ततो भुजकोटिकृतियुतिपदं कर्णः। स च राशिचापखण्डस्योभयाग्रसंस्पर्शी ज्यारूपोऽवतिष्ठते। तस्यार्द्धमर्द्धराशिज्या भवति। तद्वर्गं व्यासार्द्धवर्गाद्विशोध्य शेषस्य पदमर्द्धराशिज्याखण्डस्य भुजरूपस्य कोटिर्भवति। सा च तच्छेषस्य सार्द्धराशिद्वयस्यार्द्धज्या भवति। सार्द्धराशिचापं च पदार्द्धेऽवस्थितम्। पदं राशित्रयप्रमाणम्। तस्य चार्द्धयोस्तुल्यत्वाद्भुजकोटी समे स्याताम्। ततः समचतुरस्रचेत्रं जायते। तत्रापि व्यासार्द्धं कर्णः। समभुजकोट्योर्वर्गयुतितुल्यः कर्णवर्गः। तस्यार्द्धं भुजवर्गः कोटिवर्गो वा तुल्यत्वादवशिष्यते। तत्पदं भुजः कोटिर्वा। तदेव सार्द्धराशिज्यार्द्धं भवति। पदस्य तु राशित्रयप्रमाणस्य ज्यार्द्धं व्यासार्द्धमेवेति। खण्डकानां च राश्यर्द्धान्तरत्वान्नवशत्या खण्डकलब्धिर्भवति। स्पष्टखण्डकाच्च फलानयने त्रैराशिकम्। यदि नवशत्या कलाभिः स्पष्टखण्डकं लभ्यते तद्विकलेन किमिति। इति सर्वमुपपन्नम्॥

अथ ज्यात्मकराशेश्चापीकरणमाह।

ज्याखण्डोने शेषे
गुणिते नवभिः शतैरशुद्धहृते।
क्षेप्याणि शुद्धखण्डै-
र्गुणितानि शतानि नव चापम्॥८॥

यस्य ज्यात्मकस्य राशेश्चापं कर्तुमिष्यते तस्मिन् ज्याखण्डोने तस्माद्यावन्त्येकोनचत्वारिंशदाद्यानि खण्डकानि शुद्ध्यन्ति तावन्ति विशोध्य गतगम्यखण्डकयोश्चिह्नं विधाय च शेषे विकलसंज्ञे नवभिः शतैर्गुणितेऽशुद्धखण्डकेन हृते च यल्लब्धं तत्र शुद्धखण्डकेन स्पष्टीकृतेन भागो हर्तुमुचित इति। तस्य स्पष्टीकरणायोत्तरे आर्यामाह।

चापानयने नवशत-
विकलवधाद्भोग्यलब्धलिप्ताभिः।
कृत्वा खण्डकमसकृ-
त्तल्लब्धकला विकलचापम्॥९॥

चापानयने कार्ये सति नवशतानां शुद्धज्याखण्डकशेषस्य विकलस्य च वधाद् घाततो भोग्यखण्डकेन लब्धलिप्ताभिर्मन्दकर्म-वदसकृत्स्पष्टखण्डकं कृत्वा तल्लब्धकला विकलचापं भवत्ययमर्थः। प्रथमं नवशतविकलवधात् भोग्यखण्डकेन मध्यमेन यल्लब्धकलादि तेन स्पष्टखण्डकं कृत्वा तेन नवशतविकलवधं भजेद्यल्लब्धं पुनस्तदेव विकलं प्रकल्प्य तेन पुनः स्पष्टखण्डकमेवं तावद्यावल्लब्धकलाः स्थिरीभवन्ति। तद्विकलचापमुच्यते। तत्र पतितज्याखण्डकसंख्या-हतनवशतानि योजयेदेवमुत्तरसंस्कारेण चापं भवति।

अथ वासना ज्यानयनाद्वैपरीत्येन स्पष्टैव।

अथ स्वदेशे लम्बज्याक्षज्याक्षांशानामानयनमाह ।

विषुवत्कर्णविभक्ते
शङ्कुच्छायाहते पृथक् त्रिज्ये ।
लम्बाक्षज्ये चापं
विषुवज्ज्यायाः स्वदेशाक्षः ॥१०॥

त्रिज्या सार्द्धं शतं ते पृथक् स्थानद्वयस्थिते एकत्र शङ्कुना द्वादशकेनापरत्र स्वदेशविषुवच्छायया गुणिते सती विषुवत्कर्णेन विभक्ते कार्ये। लब्धे च फले यथाक्रमं लम्बाक्षज्ये भवतो यत्र शङ्कुहतत्रिज्याया विषुवत्कर्णेन फलं तत्र लम्बज्या भवति। यत्र च विषुवच्छायाहतत्रिज्याया विषुवत्कर्णेन फलं तत्राक्षज्येत्यर्थः। लम्बोऽवलम्बकः। स ज्यारूपो लम्बज्या। अक्ष इवाक्ष इत्युपमानात् ध्रुवयष्टिस्तस्या उत्तरक्षितिजाद्य उच्छ्रयस्तत्राक्षविषुवच्छब्दौ पूर्वाचार्याः सङ्केतयामासुस्तस्य ज्या अक्षज्या। विषुवज्ज्यायाश्चोक्तविधिना यच्चापं स स्वदेशाक्षोऽक्षांशाः। लम्बज्याचापं च स्वदेशलम्बांशा इत्यनुक्तमपि ज्ञेयम्। तच्चात्रानुपयोगित्वादाचार्येण नोक्तमिति।

अत्र वासना। स्वदेशाक्षाग्रयोर्गोले विन्यस्ते सममण्डलाद्दक्षिणेन याम्योत्तरमण्डलविषुवन्मण्डलसम्पाते सूत्रस्यैकमग्रं बद्ध्वा द्वितीयमग्रं सममण्डलादुत्तरेण नीत्वा तावत्येवान्तरे तस्मिन्नेव याम्योत्तरमण्डले बध्नीयात्तत्तथावदवतिष्ठते तदर्द्धं सममण्डलमध्यभूमध्यावगाहि सूत्रावच्छिन्नमक्षज्या। अक्षज्याया अप्युत्तरक्षितिजात्तावतैवोन्नतत्वात्। तदग्रे दक्षिणस्यामवलम्बकं भूमध्यविनिर्गतदक्षिणोत्तरायतदक्षिणक्षितिजप्रापिसूत्रप्रापिणं बध्नीयात्सा स्वदेशलम्बज्या। तत्र लम्बज्या कोटिरक्षज्या भुजस्तद्वर्गसंयुतेर्मूलं कर्णो व्यासार्द्धमेवं स्थिते सति

त्रैराशिकम्। यदि विषुवत्कर्णस्य द्वादशकः कोटिस्तदा त्रिज्या-कर्णस्य केति लब्धं लम्बज्या। तथा यदि विषुवत्कर्णस्य विषुवच्छाया-भुजस्तदा त्रिज्याकर्णस्य केति लब्धमक्षज्या। ज्यायाश्च चापं तन्मानै-वांशा भवन्ति। तत्र मेरौ नवतिरक्षांशाः। ध्रुवस्योपरि स्थितत्वात्। विषुवत्यर्कस्य क्षितिजासन्नत्वात् लम्बकाभावः। निरक्षे च ध्रुवयोः क्षितिजासन्नत्वाल्लम्बांशा नवतिरक्षाभावः। विषुवति रवेरुपरि सम-मण्डलस्वस्तिकस्थत्वात्तदन्तरदेशेषु लम्बांशानामक्षांशानां च योगो नवतिरंशास्तेन सममण्डलाद्दक्षिणेन याम्योत्तरमण्डलगत्या क्षितिज-स्वस्तिकयोर्यावन्नवतिरंशास्तेभ्यो यदाऽक्षांशाः शोध्यन्ते तदा लम्बांशा एवावशिष्यन्ते। यदा तु लम्बांशाः शोध्यन्ते तदाऽक्षांशास्ते च सदैव दक्षिणाः। विषुवन्मण्डलस्य सममण्डलाद्दक्षिणेन स्थितत्वा-त्तदन्तरं ह्यक्षांशा स्ते च विषुवद्दिनमध्याह्ने नतांशास्तावद्भिरंशैस्तत्र दिने तत्र काले सममण्डलस्वस्तिकादर्कस्य नतत्वात्। लम्बांशा-स्तोन्नतांशास्तत्र दिने तत्र काले तावद्भिरंशैर्दक्षिणक्षितिजादर्कस्योन्नत-त्वादित्यर्थतः सिद्धो भवति।

अथ ग्रहाणां क्रान्त्यानयनाय भुजात्मकराशि राश्यर्द्धस्य राश्यर्द्धस्य क्रान्तिचापलिप्तानां षट् खण्डकानि पिण्डितानि तथोत्पन्नक्रान्ते-र्विक्षेपसंस्कारमाह।

क्रान्तिकला द्विरसगुणा३६२-
स्त्रिखमुनयो७०३ द्विखदिशो१००२ वसुत्र्यर्काः१२३८।
वसुवसुविश्वे १३८८ खकृत-
मनवः१४४० स्वक्षेपयुतवियुताः॥११॥

ग्रहस्य सायनस्य भुजीकृतस्य भुजसम्बन्धिप्रथमराश्यर्द्धस्य क्रान्तिचापकला द्विरसगुणा द्विषष्ट्यधिकशतत्रयम् ३६२। द्वाभ्येव

त्रिखमुनयस्त्र्यधिकसप्तशतानि ७०३ । सार्द्धराशेर्द्विखदिशो द्व्यधिकदश-शतानि१००२। राशिद्वयस्य वसुत्र्यर्का अष्टात्रिंशदधिकद्वादशशतानि १२३८ । सार्द्धराशिद्वयस्य वसुवसुविश्वेऽष्टाशीत्यधिकत्रयोदशशतानि १३८८ । राशित्रयस्य खकृतमनवश्चत्वारिंशदधिकचतुर्दशशतानि १४४० । एषा परक्रान्तिः । एताश्च क्रान्तयः पृथक् पृथक् राश्यर्द्धजक्रान्तिखण्डकरणाय यथाऽधो विश्लिष्टाः कार्याः । एवं षट् खण्डकानि भवन्ति । तानि यथा ।

द्विषट्कृति३६२र्भूयुगवित्रभानवो३४१
नवाङ्गनेत्रा२८६ रसरामपाणयः २३६ ।
खपञ्चचन्द्राः १५० करसायकाः ५२ कलाः
क्रान्तेः स्युरेतानि च खण्डकानि षट् ॥१॥

एतैश्च खण्डकैः सायनग्रहात् ज्यानयनवत् भुजीकृत्य भोग्य-खण्डकस्य स्पष्टीकरणपूर्वं क्रान्तिरानेया । सा च सायनग्रहे मेषादिराशिषट्कस्थे उत्तरा तुलादिस्थे च दक्षिणा । एवं तु रवे-श्चन्द्रादीनां वक्ष्यमाणविधिनोत्पन्नस्वस्वविक्षेपेण एकदिक्त्वे युता भिन्न-दिक्त्वे च वियुता सती स्पष्टा स्वक्रान्तिः ।

अत्र वासना । यदाऽपममण्डलज्या त्रिज्यातुल्या भवति तदाऽपमण्डलविषुवन्मण्डलयोरन्तरं जिनभागज्यातुल्यं भवति । यदा तु त्रिज्यात ऊनाऽपमण्डलज्या तदा तत्र प्रदेशे विषुवन्मण्डलेन सहापमण्डलस्य कियदन्तरमिति फलमिष्टक्रान्तिज्या । यतो विषुव-न्मण्डलापमण्डलयोरन्तरं नाम क्रान्तिः । सा च मेषादिराशित्रये उत्तरा सत्युपचीयते यावत्पदान्ते परमा । ततश्च कर्कादावपचीयते । यावत्पदान्तेऽभावस्तुलादौ च दक्षिणाया एवमेवोपचयापचयौ भवत एवं भुजमूलत्वमस्याः । अतः सा मेषाद्यपमण्डलार्द्धे स्थितस्य

सायनग्रहस्योत्तरा तुलादौ च दक्षिणा। रवेः सैव स्फुटा। यतोऽपमण्डल एव रविश्चरति। चन्द्रादीनां तु स्वस्वविमण्डलवशाच्छिद्यते। यतो मेषाद्यपमण्डलार्द्धस्थिता अपि चन्द्रादयः स्वस्वविक्षेपवशात् विषुवन्मण्डलतो दक्षिणेनापि भवन्ति। यतः स्वस्वविमण्डलस्थाश्चन्द्रादयो भ्रमन्ति। अतस्तत्क्रान्तिज्याचापस्य स्वस्वविक्षेपेण दिगैक्यान्यत्वे युतवियुतस्य या ज्या सा ग्रहस्य स्फुटा स्वक्रान्तिज्या भवति। अत्र त्वाचार्येण पञ्चदशानामंशानां ज्याभिस्त्रैराशिकेन क्रान्तिज्या उत्पाद्य तच्चापलिप्ता एव लाघवार्थमुपनिबद्धाः। तद्यथा। यदि त्रिज्यातुल्यभुजज्यया जिनभागज्या ६०।५८ लभ्यते तत्पञ्च*-दशानामंशानां ज्यया एकोनचत्वारिंशता कियतीति लब्धं क्रान्तिज्या १५।४४ अस्याश्चापम् ३६२ एतत्प्रथमं क्रान्ति (चाप) लिप्ताखण्डकम्। तथा राशिज्या ७५ प्राग्वत्क्रान्तिज्या ३०।२९ अस्याश्चापम् ७०२। एवं शेषाण्यपि चापानि। अत्र त्रिज्यायां (जातं) क्वचित् क्वचिदन्तरमुपेक्ष्य ग्रन्थान्तरानुसारेणैव क्रान्तिचापलिप्ता आचार्येणोपनिबद्धा इति। (अथ च) दृग्दलानयनादिषु ग्रहाणां सायनत्वं व्याख्यातमतोऽयनांशानयनायोत्तरे श्लोकौ।

गोऽगैकगुण३१७९युक्शा(कात्खाष्टवह्नि)नगै७३८०र्हृतात्।
भगणादेः क्रान्तिभागा ऋणस्वं सौम्यदक्षिणाः॥
अयनांशाः प्रदातव्या लग्ने क्रान्तौ चरा(गमे।
विक्षिभे स)त्रिभे याते तथा दृक्कर्मपातयोः॥२॥

अयमर्थः। गावश्च अगाश्च एकश्च गुणाश्च गोऽगैकगुणास्तैर्युज्यते (सहितो भवति इ)ति युक् स चासौ शाकश्च। तस्मादेकोनाशीत्यधिक एकत्रिंशच्छतयुक्तशककालात्खाष्टवह्निनगै (रशीत्यधिकत्रिस)प्ततिशते-

---

* इतः प्रभृति मूलपुस्तकस्यैकपत्रमर्द्धनष्टम्। अतोऽत्र व्याख्योपपत्त्योर्बहुधाऽनुसन्धाना-त्सन्दर्भयोजनं मदीयमेव। तत्र कोष्ठकान्तर्गतान्यक्षराणि मद्योजितानि।

भगणाद्यङ्गणादि फलं स आयनग्रह उच्यते। तस्माद्ये क्रान्तिचापांशास्तेऽयनांशा उच्यन्ते। ते च य(दोत्तरास्तदर्णं द)क्षिणा श्चेद्धनम्। साम्प्रतं तु धनगतानां चिरस्थायित्वात् धनसंस्कारमेवाह। अयनांशा इति। लग्नानयने(क्रान्त्यानयने चरानय)ने वित्रिभे लम्बनानयने सत्रिभे वलनानयने यातानयने आयनदृक्कर्मणि (पातानयने) च दातव्या इति।

अत्र वासना। विषुवन्मण्डलापमण्डलयोर्यः सम्पातः स क्रान्तिपात इति पूर्वाचार्यैः शंसितस्त(तो वेधेन तस्या) शीत्यधिक त्रिसप्ततिशतैः सौरवर्षैर्भगणभोग उपलब्धस्तस्माद्यो राश्यदिर्ग्रहः स आयनग्रहः क(ल्पितस्तस्य मेषादेर्ये)ऽशास्तेऽयनांशा अयनस्योत्तरस्य दक्षिणस्य च वा मकरादिकर्क्यादिभोगाभ्यां यच्चलनं तस्य येंऽशास्ते (आगताः। मेषा)दौ त्वायनग्रहस्य भगणान्तस्थत्वादयनांशाभाव एव। शकादौ तु गोऽगैकगुणसंख्याः कलिगताब्दा (आसन्निति तत्र विद्य) मानशाकस्य च योजने इष्टसौरवर्षावधि कलिगताब्दा भवन्ति। कलियुगादेर्ह्ययनांशप्रवृत्तिः। तत्क्रान्त्यंशा (उत्तरा श्चेद)यनांशा ऋणगता ज्ञेयाः। अतीत एव मकरकर्क्यादिभोगे ग्रहाणां परमापक्रमावस्थानात्। दक्षिणाश्चेत्त(दाऽनांशा धन)गता एव। मकरकर्क्यादिभोगे ग्रहाणां परमापक्रमावस्थानात्ते चैकादशाधिकपञ्चशतसंख्यशाकादारभ्य (षट्पञ्चाशद)धिकत्रयोविंशतिशतसंख्यशाकं यावद्धनगता उपचीयन्ते। यावच्चतुर्विंशतिः। ततश्च पञ्चचत्वारिंशद (धिकाष्टादशशत) वर्षैस्तावदेवापचयस्तेभ्यस्तत्र चैकाधिकद्वाचत्वारिंशच्छतसंख्यशाके अयनांशाभावोऽत ऊर्द्ध्वमृण(गतास्ततो धनगता)स्तथा चोक्तम्।

काले कलेः खवसुपावकशैल७३८०भक्ते
स्यादायनं च भगणादि फलं ग्रहस्य।

तद्गोलयो ऋणधनं तद(योचरांश-
क्रान्त्यं)शलग्नसमयानयने ग्रहाणाम् ॥

* एतच्च ग्रन्थगमनिकामात्रं न तु तथा चित्तचमत्कारिणो उपपत्तिरवगम्य(त इतिनास्मत्सं)मतं वैसदृश्यात्तथा च सूर्यसिद्धान्ते।

त्रिंशत्कृत्वो युगे भानां चक्रं प्राक् परिलम्बते।
तद्गुणाद्भूदिनैर्भक्ताद् द्युगणाद्यदवाप्यते ॥१॥
तत्संयुक्ताद्ग्रहात्क्रान्तिच्छायाचरदलादिकम्।
स्फुटं दृक्तुल्यतां गच्छेदयने विषुवद्वये ॥२॥
प्राक् चक्रं चलितं हीने छायार्कात्करणागते।
अन्तरांशैस्तथोवृत्य पश्चाच्छेषैस्तथाऽधिके ॥३॥
एवं विषुवती छाया स्वदेशे या दिनार्द्धजा।
दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा ॥४॥

राजमृगाङ्के तु।

विम्बार्द्धेन समं यस्य याम्यक्रान्तिभवं धनुः।
तस्मिन्मध्यदिनस्थेऽर्के या छाया विषुवत्प्रभा ॥

इति विषुवच्छायाऽयनांशानां सहैव प्रत्यक्षोपलब्धिरुक्ता।

अयनचलने षडंशाः पञ्चाशल्लिप्तिका वृद्धिः।
लिप्तिका प्रतिवर्षं शतशरवसु८५४सम्मिताच्छाकात् ॥

अन्येश्च।

एकाब्धिवेद ४४१ वियुते शाके द्विगुणे नवेशलब्धांशा।
चलदयनोत्थाः क्षेप्या लग्ने क्रान्तौ चरागमे याते ॥

* अत्र टीकाकृतो नाशयोऽवगम्यते।

भास्करसिद्धान्ते तु।

विषुवत्क्रान्तिवलययोः सम्पातः क्रान्तिपात इति गदितः।
तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे॥
अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्।
तत्पक्षे तद्भगणाः कल्पे गोऽङ्गर्त्तुनन्दगोचन्द्राः॥
तत्संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः।
क्रान्तिवशाच्चरमुदयास्वरदललग्नागमे ततः क्षेप्यः॥२॥

करणकुतूहले तु। अथायनांशा करणाब्दयुक्ता भवा इत्युक्तम्। शकः पञ्चदिक्चन्द्रहीन इति करणशकाब्दाः ११०५। अत्र च खव-सुपावकशैलसङ्ख्यभगणभोगेन कल्पे क्रान्तिपातभगणा रसषट्कृति-विषयगजबाणाः ५८५३६६। न च कलियुगादौ भगणान्तेनापि सूर्यसिद्धान्तवत् पूर्वापरा एवोत्पादिता अयनांशाः किं तत्र भगणभोगेन पूर्वापरकायनग्रहस्य ये याम्योत्तराः क्रान्त्यंशास्त एव पूर्वापरत्वेन संस्कार्या इत्युक्तमतो दुरवबोधत्वेन तद्विद एव प्रमाण-मिति। ब्रह्मगुप्ताचार्येण तु तन्त्रपरीक्षाध्याये एतत्प्रत्युत दूषितम्। तथा च—

परमाल्पा मिथुनान्ते द्युरात्रिनाड्योऽर्कगतिवशाद्भवः।
नायनयुगायनवशात्स्थिरमयनद्वितयमपि तस्मात्॥

चतुर्वेदपृथूदकस्वामिना त्वेतदसद्दूषणमित्यभिहितम्। यतस्तेन खखाष्टसंख्यशाके सार्द्धाः षट् दृष्टा इति। प्रद्योतनसिद्धान्ते तु अयनांशाख्या नक्षत्राणां प्राची गतिरित्युक्तम्। करणोत्तमे तु—

रविच्छायाभान्वोर्विवरमयनांशाः स्युरथ वा
कलारूपा याताः करणशरदः षट्शतयुताः।
गताब्दैरत्यष्टिद्वियुगसहितैर्वाऽक्षचकुरसैः
फलाङ्कैः क्रान्तेर्धनुरजतुलादावृणधनम्॥

इत्युक्तम्।

छायार्कानयनं च तत्रैव यथा।

स्वाक्षेष्टभाक्षयोरैक्यं दक्षिणेऽन्तरमुत्तरे।
छायाग्रक्रान्तिरक्षोऽर्ध्वं रविज्यावैपरीत्यतः॥

तस्याश्चापं पूर्वपादे दिनेशो
षड्भाच्छुद्धं कर्कटाद्ये द्युनाथः।
षड्भिर्युक्तं राशिभिस्तौलिपूर्वे
चक्राच्छुद्धं चक्रपादे चतुर्थे॥

अयमर्थः। स्वाक्षः स्वदेशाक्षः तथेष्टदिने या मध्याह्नच्छाया तां विषुवच्छायां प्रकल्प्योक्तविधिना येऽक्षांशाः स इष्टभाक्ष उच्यते। ततो यदि मध्याह्नच्छायाया अग्रं पूर्वापररेखाया दक्षिणेन भवेत्तदाऽक्षद्वयस्य योगः कार्यो यदोत्तरेण छायाग्रं तदाऽक्षयोरन्तरं कार्यमेवं माध्याह्निकी क्रान्तिश्चापात्मिका भवति। तस्या ज्यां कृत्वा त्रिज्यया १५० गुणयेत् परमक्रान्तिज्यया ६०।५८ भजेद्रविभुजज्या भवति शेषं स्पष्टमिति। अतः प्रत्यक्षोपलब्धिरेवायनांशोत्पत्तौ श्रेयसी सा चानियोगातिशयाद्भवति। यथा च वराहमिहिराचार्यः।

आश्लेषार्द्धाद्दक्षिणमुत्तरमयनं रवेर्द्धनिष्ठाद्यम्।
आसीत्कदाचिदेवं येनोक्तं पूर्वशास्त्रेषु॥
साम्प्रतमयनं सवितुः कर्कटकाद्यं मृगादितश्चान्यत्।
उक्ताभावे विकृतिः प्रत्यक्षपरीक्षणैर्व्यक्तिः॥

विकृतौ तु तत्रैव फलम्।

अप्राप्य मकरमर्को विनिवृत्तो हन्ति सापरां याम्याम्।
कर्कटकमसम्प्राप्तो हन्यात्प्राचीं तथोदीचीम्॥

इति। नवाधिकपञ्चशतसङ्ख्यशाके वराहमिहिराचार्यो दिवं गतस्तस्मिंश्च समयेऽयनांशाभाव आसन्न एवेति।

अथेष्टदिने मध्याह्नच्छायानयनमाह।

**क्रान्त्यंशैरूनयुतं स्वाक्षमनष्टं विशोध्य नवतेर्ज्या।**
**छेदोऽनष्टज्यायाः सूर्यगुणाया दिनार्द्धे भा ॥१२॥**

इष्टदिने माध्याह्निकात् स्फुटसूर्यात् उक्तविधिना क्रान्तिमानीय तां षष्ट्या विभज्यांशाः कार्यास्तैरुत्तरैर्दक्षिणैर्वा तत्र दिने यावत् खमध्यादुत्तरतो दक्षिणतो वा सूर्यो नतो भवति तावन्नवतेः संशोध्य शेषा उन्नतांशा भवन्ति ततोऽस्य सूत्रस्यावतारः। स्वाक्षं स्वदेशाक्षं क्रान्त्यंशैरुत्तरैरूनं दक्षिणैश्च युतमनष्टं सत नवतेर्विशोध्य शेषस्योक्तविधिना ज्या ग्राह्या। साऽनष्टस्य राशेर्ज्यया द्वादशाहतायाश्छेदो भवति। तेन यत् फलं सा दिनार्द्धे मध्याह्नकाले द्वादशाङ्गुलशङ्कोश्छाया भवति।

अत्र वासना। क्रान्त्यंशानां स्वदेशाक्षांशानां च समदिश्यैक्यं भिन्नदिश्यन्तरं माध्याह्निका नतांशा भवन्ति। तावद्भिरंशैस्तत्र दिने उत्तरतो दक्षिणतो वा क्षितिजादुन्नतो रविर्भवति। तेषामुभयेषामपि ज्या तत्सम्बन्धिन्येव माध्याह्निको भवति। ततस्त्रैराशिकम्। यद्युन्नतज्याकोटेर्नतज्या भुजस्तदा द्वादशकस्य केति लब्धमङ्गुलाद्या माध्याह्निकी छाया। यत्र चाक्षांशेभ्यः शोध्यमानोत्तरा क्रान्तिरक्षसमा भवति तत्र देशे तस्मिन्नहनि मध्याह्नच्छायाऽभावः। एतच्च लङ्कात आरभ्योत्तरेणोज्जयिनीं यावत्सम्भवति। यतस्तत्र परमापक्रमतुल्या एवाक्षांशाः। यत्र च चतुर्विंशतेरधिका अक्षांशास्तत्र मेरुं यावदुत्तराभिमुखी छाया भवति। दक्षिणक्रान्तौ चोत्तराभिमुख्येव। यत्र चोत्तराः क्रान्त्यंशा अक्षांशेभ्योऽधिका भवेयुस्तत्र क्रान्त्यंशेभ्योऽक्षांशानां शोधने कृते सत्युक्तविधिना या मध्याह्नच्छाया सा दक्षिणाभिमुखी भवत्येतदुज्जयिनीतो दक्षिणेन लङ्कां यावत्सम्भवति।

अथेष्टदिने मध्याह्नच्छायाकर्णानयनमाह ।

**क्रान्त्यंशाक्षांशैक्यान्तर-हीनत्रिगृहज्यया हृता त्रिज्या ।**
**द्वादशभिः सङ्गुणिताऽङ्गुलादिलब्धं द्युदलकर्णः ॥१३**

द्युदलग्रहणात् माध्याह्निकानामेव क्रान्त्यंशानामक्षांशानां च समदिशि यदैक्यं भिन्नदिशि यदन्तरं तेन हीनं च तच्च तत् त्रिगृहं च। तच्च नवतिरंशाः। तस्य या ज्या सोन्नतांशज्ज्येवोच्यते। प्राग्वत्तया द्वादशगुणिता सती त्रिज्या हृता कार्या ततो यल्लब्धमङ्गुलादि स मध्याह्नकालीनः कर्णो भवति। शङ्क्वग्राच्छायाग्रं यावद्यत्तिर्यक् सूत्रं तत्कर्णशब्देनात्रोच्यते। अत्रापि त्रैराशिकेनैव वासना। यद्युन्नतज्याकोटेस्त्रिज्या कर्णस्तदा द्वादशकस्य क इति। लब्धमङ्गुलादि-मध्याह्नच्छायाकर्ण इति।

अथ कर्णतश्छायानयनं छायातश्च कर्णानयनमुन्नतकालप्रति-पादनं चाह।

**कर्णच्छायाकृत्योः शङ्कुकृतिविहीनयुक्तयोर्मूले।**
**छायाकर्णौ द्युदलं नतहीनं दिवसगतशेषम् ॥१४॥**

कर्णस्य छाया च कर्णच्छाये तयोः कृती वर्गौ तयोर्मध्यात् या कर्णकृतिः सा शङ्कुकृत्या द्वादशवर्गेण १४४ विहीना कार्या। या च छायाकृतिः सा शङ्कुकृत्या द्वादशवर्गेण युक्ता कार्या। एवं विधयोस्तयोर्ये मूले ते यथाक्रमं छायाकर्णौ भवतो यत्र कर्ण * इत्यर्थः। शङ्कुरत्र द्वादशाङ्गुलप्रमाणः। तथा च ब्रह्मसिद्धान्ते।

---

* कृतिर्द्वादशवर्गेण हीना तत्र छाया। यत्र च छायाकृतिर्द्वादशवर्गेण युता तत्र कर्ण"— इयं पङ्क्तिस्त्रुटिरिवाभाति।

मूले द्व्यङ्गुलविपुलः सूच्यग्रो द्वादशाङ्गुलोच्छ्रायः ।
शङ्कुस्तलाग्रविद्धोऽग्रवेधलम्बादृजुर्ज्ञेयः ॥

इति। तुल्याग्रमूलपरिधिर्द्वादशाङ्गुलः कार्यः। तथा द्युदलं दिनार्द्धप्रमाणं नतेन कालेन विहीनं सत्पूर्वाह्णे दिवसगतमपराह्णे दिवसशेषं भवत्येतदुक्तं भवति। पूर्वाह्णे यावत्यो दिनगता घटिकास्ता दिनार्द्धघटिकाभ्यः शुद्धाः शेषा नतसंज्ञा भवन्ति। तावतीभिर्घटिकाभिर्भगवान् सहस्रांशुः खमध्यमारोच्यत्यपराह्णे यावत्यो दिनशेषा घटिकास्ता दिनार्द्धतः शुद्धाः शेषा नतसंज्ञा भवन्ति। तावतीभिर्घटिकाभिर्मध्याह्नोन्नतो रविरित्येवं नतहीनं दिनार्द्धमुन्नतं भवति। तच्च पूर्वाह्णे दिनस्य गतमपराह्णे शेषमित्यत्र छायाकर्णयोरानयनवासनाऽऽयतचतुरस्रक्षेत्रवद्योज्या शेषा स्पष्टैव।

अथान्त्याच्छेदानयनपूर्वं मध्याह्नकर्णादिष्टकाले छायाकर्णानयनमाह।

त्रिज्या चरार्द्धजीवायुतहीनाऽन्त्या नतोत्क्रमज्योना।
छेदोऽन्त्याया दिनदलकर्णगुणायाः फलं कर्णः ॥१५॥

त्रिज्या सार्द्धशतं सोत्तरचरार्द्धजीवायुता दक्षिणचरार्द्धजीवया हीना सती अन्त्या भवति। साऽन्त्या इष्टनतकालस्योत्क्रमज्यया ऊना सती छेदो भवति। कस्येत्याह। अन्त्यायाः किंलक्षणायाः दिनदलकर्णगुणायास्तेन छेदेन हृताया यत् फलं स इष्टकाले शङ्कुलाद्यच्छायाकर्णो भवति। तद्वर्गाच्छङ्कुवर्गोनात् यन्मूलं सेष्टकाले छाया भवति। अत्र चरार्द्धनतयोर्घटिकाज्यात्मकयोर्जीवानयनायोत्तरे श्लोकार्यें।

नतोन्नतचरार्द्धानां ज्या ग्राह्या प्राणराशितः।
क्रमाच्चरार्द्धोन्नतयोर्नतज्या तूत्क्रमाद्भवेत् ॥१॥

तिथ्यधिकनतक्रमजीवा त्रिज्यायुता नतज्या स्यात्।
त्रिप्रश्ने ग्रहणे तु त्रिंशच्छुद्धाद्विपर्यस्ता ॥२॥

अयमर्थः। नतस्योन्नतस्य चरार्द्धस्य च पलात्मकस्य षड्भिर्गुणयित्वा प्राणीकृतस्य सतः कलात्मकराशेरिव नवशत्या ज्या ग्राह्या। किन्तु चरार्द्धस्योन्नतकालस्य च क्रमखण्डकैर्ज्या ग्राह्या। नतकालस्य तूत्क्रमखण्डकैरिति। यदि तु नतकालस्तिथेः पञ्चदशघटिकाभ्योऽधिको भवेत्तदा तस्याधिकस्य या क्रमखण्डकैर्ज्या सा त्रिज्यायुता सतीष्टनतकालस्य ज्या भवति। सा त्रिप्रश्नोपयोगिनी। ग्रहणकाले पुनस्तिथिभ्योऽधिकान्नतात् त्रिंशतो विशुद्धाद्यच्छेषं तस्योत्क्रमखण्डकैर्ज्या ग्राह्येति।

अत्र वासना। निरक्षे पूर्वस्यामुन्मण्डले क्रान्तिज्याग्रे उत्तरतो याम्यतो वा सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं पश्चिमायां क्रान्त्यग्र एव बध्नीयात्तदुदयास्तसूत्रम्। साक्षदेशे च पूर्वस्यां क्षितिजस्वाहोरात्रवृत्तसम्पाते उत्तरतो दक्षिणतो वा अग्राग्रे सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रमपरास्यां दिशि नीत्वा तत्रैव तावत्येवान्तरे बध्नीयात्तत् स्वोदयास्तसूत्रम्! तस्याधःशलाकया सह यत्र सम्पातस्तत्र सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रमूर्द्धन्नीत्वा याम्योत्तरवृत्तसम्पाते बध्नीयात्तत् स्वाहोरात्रार्द्धम्। तच्च साक्षे देशे तिर्यग् भवति। तत्र निरक्षोदयास्तसूत्रस्वोदयास्तसूत्रयोरन्तरं क्षितिज्यातुल्यं उत्तरगोले त्रिज्यायां योज्यते। यतोऽयःशलाकाया अधः स्वोदयास्तसूत्रं स्थितम्। स्वक्षितिजादुन्मण्डलस्योपरि स्थितत्वात्। त्रिज्या चोन्मण्डलावधिन्या अधः स्थितत्वाच्च दक्षिणगोले त्रिज्यातः शोध्यते। तच्चान्तरं क्षितिजे क्षितिज्योच्यते! सा च स्वाहोरात्रवृत्तसम्बन्धिनी यदा व्यासार्द्धे परिणाम्यते तदा चरज्या भवतीत्युपपन्नमन्त्यानयनम्।

अथ छेदवासना। क्षितिजादूर्ध्वं स्वाहोरात्रवृत्ते रव्युपलक्षितचिह्नप्रदेशाद्यावतीभिर्घटिकाभिः सूर्यो गगनमध्यमध्यास्ते स कालो नतसंज्ञस्तस्य चोत्क्रमज्या शररूपा भवति। ततः स्वाहोरात्रवृत्ते अर्कोपलक्षितचिह्ने सूत्रस्यैकमग्रं बद्धा द्वितीयमग्रं याम्योत्तरमण्डलमध्येनापरस्यां दिशि नीत्वा तावत्येवोच्छ्रिते स्वाहोरात्रवृत्तप्रदेशे बध्नीयात्तत्पूर्वापरसूत्रं यावदवलम्बितं भवति तत्परिच्छिन्नस्य धनुषो यः शरः सा नतोत्क्रमज्या। सा चान्त्यसूत्रे भवति। तया हीनाऽन्त्या छेदो भवति। रविचिह्नादुदयास्तसूत्रावधि तिर्यक् छेदसूत्रमवशिष्यत इत्यर्थः। सैवोन्नतघटिकानां ज्या स्वाहोरात्रनिष्पन्ना क्षितिज्यावद्भवति। यदा तु पञ्चदश घटिका नता भवन्ति तदा रविरुन्मण्डले वर्त्तते नतोत्क्रमज्या च त्रिज्या भवति। सा च यावत् स्वाहोरात्रेण परिणाम्यते तावत् स्वाहोरात्रार्द्धमेव भवति। अथ यदा पञ्चदशभ्योऽधिका घटिका भवन्ति तदा क्षितिजोन्मण्डलयोरन्तरे रविर्वर्त्तते। तत उन्मण्डलादधः पुनः क्रमज्या प्रवर्त्तते। ततोऽधिकस्य क्रमज्या पञ्चदशघटिकानामुत्क्रमज्यायां व्यासार्द्धं योज्यते तेनार्कद्युदलान्तरस्थितानां स्वाहोरात्रे नतोत्क्रमज्या भवति। एषा त्रिप्रश्नसम्बन्धिनी। ग्रहणे पुनः पञ्चदशघटिकाधिकं स्वदिवसनतं त्रिंशतो विशोध्य शेषस्य स्वाहोरात्रानतस्योत्क्रमेण ज्या ग्राह्या। उभयतोऽप्युन्मण्डलावधित्वात्तस्या इति।

अथेष्टकर्णानयनवासना। मध्याह्ने नताभावादन्त्यैव छेदो विषुवद्दिवसे चराभावात्त्रिज्यैवान्त्या। छेदे च महति कर्णः स्वल्पो भवति स्वल्पे च महानतोऽन्तरे व्यस्तत्रैराशिकम्। यद्यन्त्याच्छेदेन मध्याह्नकर्णो लभ्यते तदेष्टच्छेदेन क इति लब्धमिष्टच्छायाकर्ण इति। कलात्मकस्य च राशेः प्राणोक्तस्य ज्या ग्राह्या। प्राणानां कलानां च भ्रमणसाम्यात्। तथा च ब्रह्मसिद्धान्ते।

लङ्कासमपश्चिमगं प्राणेन कलां भमण्डलं भ्रमति। इति ॥१५॥

अथोन्नतकालाच्छेदानयनमाह।

**पूर्वापरयोर्दिनगत-शेषस्य चरार्द्धहीनयुतस्य।**
**क्रमजीवा चरदलजीवया युतोनाऽथवा छेदः॥१६॥**

प्राग्रात्रर्द्धात् प्रभृति मध्याह्नं यावत् पूर्वकपाले रविस्तदूर्द्धमागाम्यर्द्धरात्रं यावदपरकपाले। तत्र पूर्वकपालस्थेऽर्के दिनगतस्यापरकपालस्थे दिनशेषस्योन्नताख्यकालस्योत्तरेण चरार्द्धेन हीनस्य दक्षिणेन युतस्य प्राणीकृतस्य ज्या क्रमेण उत्तरे चरज्यया युता दक्षिणे च चरज्ययोना सती अथवा छेदो भवति। स च प्रागानीततुल्य एव भवति।

तेन चानयनायोत्तरे प्रथमश्लोकार्द्धम्।

सौम्ये तज्ज्या भवेच्छेदश्चरार्द्धे तून्नताधिके।

अयमर्थः। यद्युन्नतात्कालात् दिनगतात् शेषाद्वा सौम्ये चरार्द्धमधिकं भवेत्तदा तस्मादेवोन्नतात्कालाद्या ज्या सैव छेदो यतः परमार्थतः क्षितिजार्कान्तरं साध्यमिति।

अत्र वासना। इष्टदिने स्वाहोरात्रवृत्तं षष्टिघटिकाङ्कितं विन्यस्याग्राग्रात् सूत्रे पूर्वापरयोर्याम्योत्तरायते बध्वा क्षितिजस्वाहोरात्रवृत्तसम्पातयोस्तदग्राग्रयोः पूर्वस्यामपरस्यां च पूर्वापरमुदयास्तसूत्रं बध्वा चोन्मण्डलस्वाहोरात्रवृत्तसम्पातयोश्च पूर्वस्यामपरस्यां च पूर्वापरायतं निरक्षोदयास्तसूत्रं बध्नीयादेवं स्थिते क्षितिजस्वाहोरात्रवृत्तसम्पातात् यावत्यो दिनगतघटिकास्तावतीः स्वाहोरात्रवृत्ते सङ्गणय्य तदग्रेऽर्कोपलक्षितचिह्नं कार्यम्। ताभ्य उत्तरगोलचरदलघटिकाः शोध्यन्ते। यदुन्मण्डलावधेरूपर्यधश्च क्रमज्याः प्रवर्त्तन्ते। तत्तन्मण्डलं चरदलाख्येन स्वाहोरात्रखण्डेन क्षितिजादुपरि स्थितमतः क्षितिजार्कान्तरस्थितस्वाहोरात्रखण्डकात्तद्विशोध्यते। येन शेषघटिकानां या ज्या सोन्मण्डलावधि ज्या

भवति। दक्षिणगोले च दिनगतशेषकाले चरदलघटिका योज्यन्ते। यतः क्षितिजादध उन्मण्डलं ततश्च क्रमज्याप्रवृत्तेरुन्मण्डलार्कान्तरस्थितं स्वाहोरात्रखण्डं संगृहीतं भवति। तस्माच्च ज्योन्मण्डलावधिज्यव भवति। व्यासार्द्धे सा स्वाहोरात्रनिष्पन्ना रव्युन्मण्डलान्तरज्या भवति। स्वक्षितिजार्कान्तरज्या च स्वाहोरात्रनिष्पन्ना कृता। क्षितिजं चोन्मण्डलादध उत्तरगोलेऽतो रव्युन्मण्डलान्तरज्या चरज्यया युता क्रियते। दक्षिणगोले च क्षितिजमुन्मण्डलादुपरि स्थितमतो रव्युन्मण्डलान्तरज्या चरज्यया तत्र हीना क्रियते। येन स्वक्षितिजावधिज्या भवति। स छेद इत्यभिधीयते। तावत्प्रमाणं सूत्रं मेषतुलादौ चरज्योनयुतं सद् द्विगुणं कृत्वा तत्र एकमग्रं स्वाहोरात्रवृत्ते रव्युपलक्षितचिह्नप्रदेशे बध्नीयात् द्वितीयमग्रं निरक्षक्षितिजादधस्तावत्येवान्तरे स्वाहोरात्रवृत्ते बध्नीयात्तत्र च स्वोदयास्तसूत्रावच्छिन्नं छेदस्तस्यैव सूत्रस्य निरक्षोदयास्तसूत्रेण सह यत्र सम्पातस्तदवच्छिन्ना रव्युन्मण्डलान्तरज्योच्यते। छेदतुल्यव्यासार्द्धेन च छेदोदयास्तसूत्रसम्पातं मध्ये कृत्वा दक्षिणोत्तरायतं वृत्तं विन्यसेत्तस्य छेदः कर्णो वृहच्छङ्कुः कोटिः शङ्कुतलं भुजः। यथा विषुवद्दिनमध्याह्ने व्यासार्द्धं कर्णो लम्बज्या कोटिरक्षज्या भुजो याम्योत्तरमण्डलस्येति।

अथेष्टच्छायातो नतकालानयनमाह।

**दिनदलकर्णगुणाऽन्त्या छायाकर्णोद्धृता फलोनाऽन्त्या।**
**शेषस्योत्क्रमजीवाधनुर्दिनार्द्धान्नताः प्राणाः ॥१६॥ ***

* अथ दिनार्धकालिकच्छायाकर्णेन द्वादश कोटिस्तदा त्रिज्यया किमिति मध्याह्नशङ्कुः $= \frac{१२ \times त्रि}{दिक}$ एवमिष्टशङ्कुः $= \frac{१२ \times त्रि}{इक}$) अथ दिनार्धशङ्कुकोट्या हृतिं कर्णो लभ्यते तदा इष्टशङ्कुकोट्या क इति जातेष्टहृतिः $= \frac{हृ \times दिक}{इक}$ द्युज्यया यदीयं तदा त्रिज्यया किमिति जातेष्टान्त्या $= \frac{हृ \times दिक \times त्रि}{इक \times द्यु} = \frac{अं \times दिक}{इक}$ अस्याः फलसंज्ञा। अनया हीनाऽन्त्या च नतोत्क्रमज्येति

* "अन्त्या प्रागानीता दिनदलकर्णगुणा मध्याह्नकर्णेन गुणिता कार्या नत" इष्टच्छायावर्गं शङ्कुवर्गयुतं कृत्वा तस्य मूलं ग्राह्यम्। स तात्कालिकच्छायाकर्णस्तेन भजेत्ततो लब्धं यत् फलं तेनान्त्या ऊना कार्या ततो यच्छेषं तस्योत्क्रमज्याखण्डकैर्यद्धनुश्चापं तद्दिनार्द्धान्नताः प्राणा भवन्ति। ते च दिनार्द्धात् प्राणीकृतात् शुद्धाः शेषाः पूर्वाह्णे दिनगता अपराह्णे च दिनशेषाः प्राणाः स्युरिति। प्राणराशिश्च षड्भिर्भक्तः पलात्मको भवति। षड्भिः प्राणैः पलम्। तथा च ब्रह्मसिद्धान्ते। प्राणैर्विनाडिकार्चौ षड्भिरिति। अथ फलेनोना सत्यन्त्या यदि त्रिज्यातोऽधिका भवेत्तदा तस्यास्त्रिज्यामपास्य शेषस्य क्रमज्याभिश्चापं विधाय तत्त्रिज्याचापे चतुःपञ्चाशच्छतेषु युतं सन्नताः प्राणा भवन्ति।

अत्र वासना छायाकर्णानयनवैपरीत्येन। नतकालानयनं व्यस्तत्रैराशिकेन यथा। यदि मध्याह्नकर्णस्यान्त्यातुल्या ज्या छेदरूपा भवति तदेष्टकर्णस्य केति। तेन दिनार्द्धकर्णेनान्त्या गुण्यते छायाकर्णेन भजेद्यत् फलं तत् ज्यारूपम्। तदन्त्याया विशोध्य शेषं नतोत्क्रमज्यारूपं ज्याखण्डम्। स्वाहोरात्रवृत्ते रव्युपलक्षितचिह्नप्रदेशाद्यत्पूर्वापरं सूत्रमपरस्यां दिशि नीत्वा तस्मिन्नेव वृत्ते तावत्येवान्तरे बद्धं तिष्ठति तज्ज्यातश्छिन्नस्य धनुषः शरो भवति। तस्य चोत्क्रमज्याचापमर्थादेव नताः प्राणा भवन्ति। शेषं स्पष्टम्॥

अथेष्टच्छायात उन्नतकालानयनमाह।

**चरदलजीवोनाधिक-फलक्रमज्याधनुश्चरार्द्धेन।**
**युतहीनं पूर्वाह्णे दिवसगतं शेषमपराह्णे ॥१७॥ †**

---

* इयं पंक्तिर्मूलपुस्तके नास्ति।

† फलं नामेष्टान्त्या। सा चोत्तरदक्षिणगोलयोश्चरार्धेनोनाधिका भास्करोक्त्या सूत्रसंज्ञा। तच्चापं चोन्मण्डलावधिरुन्नतकालः स चरकालेन युतोनः स्वक्षितिजादुन्नतकाल इति। स एव पूर्वापराह्णयोर्दिनगतः शेषश्चेति।

दिनदलकर्णगुणान्त्येति यदन्तरानीतं फलं तदुत्तरचरज्ययोनं दक्षिणचरज्यया चाधिकं कार्यम्। तस्य यत् क्रमज्यया धनुस्तदुत्तरचरार्द्धेन प्राणीकृतेन युतं दक्षिणचरार्द्धेन हीनं सत् पूर्वाह्णे दिनशेषं प्राणरूपं भवति। तस्मात् षड्भक्तात् पलानि षष्ट्या च घटिका इति। यदातु फलादुत्तरचरज्या न शुद्ध्यति तदा चरज्याया एव फलं शोध्यम्। शेषस्य क्रमज्याचापेन चरार्द्धं प्राणरूपमूनं सत् दिनगतशेषं वा भवत्येत देवोत्तरे द्वितीयश्लोकार्द्धेन।

चरज्योनात् फलाद्यस्तविशुद्धिः कार्मुकेऽपि सा।

अत्र वासना। क्षितिजार्कान्तरस्थेन स्वाहोरात्रखण्डेन प्राग्वत्प्रयोजयति।

इति पण्डितमहादेवात्मज-आमशर्मविरचिते खण्डखाद्यकवासनाभाष्ये त्रिप्रश्नाधिकारस्तृतीयः॥ ग्रन्थः ६९०॥

अथ चन्द्रग्रहणाधिकारो व्याख्यायते। तत्रादावेव पौर्णमास्यां वक्ष्यमाणविधिना चन्द्रपर्वसम्भवे ज्ञाते सति तिथ्यधिकारोक्तविधिना-ऽर्द्धरात्रिकानस्तकालिकानौदयिकान्वा यथासम्भवं स्वधियाऽभ्यूह्य तिथ्यन्तासन्नान् रविचन्द्रचन्द्रोच्चपातान् विधाय बीजादिसंस्कार-पूर्वं रविचन्द्रौ स्फुटीकृत्य च तिथ्यन्तः साध्यः। तौ च रविचन्द्रौ स्वस्वनीचोच्चवृत्तस्य मध्याह्नपरिधिना फलमुत्पाद्य तत्र व्यवहारार्थं स्फुटौ विहितौ। परिधिश्चान्य उदयेऽन्यश्च मध्याह्नेऽन्यश्चास्तसमये-ऽन्यश्चान्यकालेष्वतस्तत्कालपरिधिना स्फुटौ दृग्गणितैक्यसम्वादिनौ भवतस्ताभ्यां च स्फुटतिथ्यन्तो भवत्यतो रविचन्द्रयोस्तत्कालपरिधि-मध्याह्नपरिध्योरन्तर-संस्कारायोत्तरे आर्यात्रयमाह।

स्वफलमृणं चक्रार्द्धादूने केन्द्रेऽधिके धनं मध्ये।
तत्तिथिनतकेन्द्रज्यावधो रवेः शशिनवेन्दु१९१गुणः॥
इन्दोर्नवनववेदै४९९स्त्रिज्याकृतिलब्धविकलिकोनः प्राक्।
पश्चादधिकोऽर्कोऽसकृद्दृणेऽन्यथेन्दुर्द्युने हीनः॥
क्षयधनहानिधनानि प्राक् पश्चादन्यथा रवेरिन्दोः।
प्राग्वत्पश्चात्स्वगतौ धनक्षयक्षयधनानि प्राक्॥२॥

रविचन्द्रयोर्द्वयोरपि चक्रार्द्धादूने स्वस्वकेन्द्रे स्वस्वफलं मध्ये ग्रहे ऋणं कार्यम्। अधिके तु धनमेवं तौ स्फुटौ कृत्वा ताभ्यां या तिथिस्तस्या यावान्नतकालः। अयमर्थः। चन्द्रग्रहणान्वेषणेऽर्द्ध-रात्रिकावस्तकालिकावौदयिकौ वा यथासम्भवं पूर्णमास्यन्तासन्नौ रविचन्द्रौ स्फुटीकृत्य ताभ्यां तिथिमानीय वर्त्तमानायाश्च तस्या गतं गम्यं च कालमानयेद्यत्र पौर्णमास्यन्तस्तस्य तद्दिनरात्रार्द्धस्य च यदन्तरं स नतः कालः स च स्थूलो यतः परिध्यन्तरसंस्कारे रविचन्द्रयोः स्वस्वदिनार्द्धान्नतत्वमन्वेष्यम्। तथा च ब्रह्मसिद्धान्ते।

तद्द्युदलपरिध्यन्तरगुणा हृता त्रिज्यया स्वनतजीवा।

इति। तत्रामावास्यान्ते यदेव नतत्वं रवेस्तदेव चन्द्रस्यापि। अप-

मण्डलभोगेन द्वयोरपि तुल्यत्वात्। पौर्णमास्यन्ते त्वन्यद्रवेरन्यच्च चन्द्रस्य। तत्र द्वयोरपि अपमण्डलभोगस्य षड्राश्यन्तरितत्वेन विमण्डलावस्थानवशेन च स्वस्वदिनार्द्धयोर्भेदादतस्तत्र वक्ष्यमाणविधिना चन्द्रोदयास्तलग्ने विधाय तयोरन्तरकालार्द्धं चन्द्रदिनार्द्धं कृत्वा तस्माच्चन्द्रोन्नतकालं विशोध्य यो नतकालः स उपपन्नोऽत्यान्तरत्वात्कर्मवाहुल्याच्चात्रोपलक्ष्यते। अन्यदा तु परिध्यन्तरसंस्कारे चन्द्रस्यैवमेव नतः कालः साध्यस्तस्य चोत्क्रमेण ज्या ग्राह्या। सा नतज्या भवति। यदा च पञ्चदशघटिकाभ्योऽधिका नतघटिका भवन्ति तदा तास्त्रिंशती विशोध्य याः शेषास्ताश्चन्द्रार्द्धरात्रान्नताः परिकल्प्य तासामुत्क्रमेण ज्या ग्राह्या। सा नतज्या भवति। तथा रविचन्द्रयोर्द्वयोरपि या स्वस्वकेन्द्रज्या तयोर्द्वयोरपि यो वधः स यदि रविसम्बन्धी भवति तदा शशिनवेन्दुभिरेकनवत्यधिकशतेन १९१ गुणः कार्यः। इन्दुसम्बन्धी नवनववेदैरेकोनपञ्चशत्या ४९९ गुणनीयः। तावुभावपि राशी त्रिज्याकृत्या पञ्चशताधिकद्वाविंशतिसहस्रै २२५०० र्भजेत्ततो लब्धा याः पृथक् पृथक् विकलास्ताभिः पूर्वकपालनतः सूर्य ऊनः कार्यः। पश्चात्कपालनतश्चाधिक इति। इन्दुस्तु ऋणसंज्ञे षड्राश्यूनस्वकेन्द्रे सूर्यादन्यथा प्राग्नतोऽधिकः कार्यः पश्चान्नतस्तु हीन इति। धनसंज्ञे तु षड्राश्यधिके स्वकेन्द्रे फलद्वयेऽपि हीनः कार्यः। एवं तद्भुक्त्योरपि विकला उत्पाद्यास्तद्यथा। स्वकेन्द्रगत्याः करणे यत्स्पष्टखण्डकं तेन स्वस्वकेन्द्रभुक्तिं संगुण्य नवशत्या भजेल्लब्धं स्वस्वकेन्द्रभुक्तिज्ये भवतस्ते द्वे अपि नतज्याहते सतो स्वस्वगुणकगुणे त्रिज्याकृत्या भजेल्लब्धे फले पृथक् पृथक् स्वस्वभुक्त्योर्विकलात्मके भवतस्तत्र यद्रविभुक्तिविकला फलं तत् प्राक्कपालस्थे रवौ स्वकेन्द्रपदवशात् यथाक्रमं चयधनहानिधनानि कार्याणि। पश्चात्कपालस्थे त्वन्यथा। धनचयधनचयाः कार्याः। इन्दोस्तु पश्चात्कपालस्थस्य स्वकेन्द्रपदवशाद्यथाक्रमं भुक्तौ विकलासंस्कारः प्राग्वद्यथा रवेः प्राक कपालस्थस्य चयधनहानि-

धनानीत्यर्थः। प्राक्कपालस्थस्य खगतौ केन्द्रपदवशात् धनक्षयक्षयधनानि कार्याणि। एवं कृते तत्कालपरिधिस्फुटौ सभुक्तिकौ रविचन्द्रौ भवतः। एतच्च कर्मासकृत्कार्यम्। स्फुटाभ्यां पुनस्तिथ्यन्तस्तत्र च पुनरेतदेवं तावद्यावदविशेष इति।

अत्रोपपत्तिः। तत्र रवेर्मध्याह्नपरिधिभागाः १३।४० पूर्वस्यामुन्मण्डले ऋणपरिधिः १४।० तत्र धनपरिधिः १३।२० पश्चिमायामुन्मण्डले ऋणपरिधिः १३।२०धनपरिधिः १४ तथा च ब्रह्मसिद्धान्ते।

सूर्यस्य मनुद्वितयं त्र्यंशोनं दिनदले नतस्य प्राक्।
तिथिघटिकाभिस्त्र्यंशाधिकोनमूनाधिकं पश्चात्॥
द्युदले जिनलिप्तोनं दशनद्वितयं द्विशरकलोनं प्राक्।
पश्चाद्युतोर्नमिन्दोः सूर्यवदृणधनपरिध्यंशः॥२॥

परिधेश्च स्पष्टीकरणं तत्रैव।

तद्द्युदलपरिध्यन्तरगुणा हृता त्रिज्यया स्वनतजीवा।
ऊने धनमृणमधिके दिनार्द्धपरिधौ स्फुटः परिधिः॥

इति। एवं च रवेर्मध्याह्नोदयपरिध्योर्मध्याह्नास्तपरिध्योश्चान्तरे लिप्ताः २० एतास्त्रिज्याहता भगणांश ३६० हृताश्च लब्धं ज्या ८।२० अस्याश्चापं विकलाः १८१ चन्द्रस्य मध्याह्नपरिधिभागाः ३१।३६ प्रागुन्मण्डले ऋणपरिधिः ३०।४४ पश्चादुन्मण्डले ऋणपरिधिः ३२।२८ धनपरिधिः ३०।४४ एवं चन्द्रस्य मध्याह्नोदयपरिध्योर्मध्याह्नास्तपरिध्योश्चान्तरे लिप्ताः ५२ एतास्त्रिज्याहता भगणांशहृताः फलज्या २१।४० अस्याश्चापं विकलाः ४८८ अतस्त्रैराशिकद्वयम्। यदि त्रिज्यातुल्यकेन्द्रज्यया रवेः शशिनवेन्द्वो विकला अन्तरं लभ्यते तदेष्टकेन्द्रज्यया किमिति। ततो द्वितीयं त्रैराशिकम्। यदि त्रिज्यातुल्यनतज्यया इदमन्तरं तदेष्टनतज्यया किमिति। अत्र त्रैराशिकद्वयेऽपि त्रिज्या भागहारोऽतस्तद्वर्ग एव भागहारः सिद्धः।

केन्द्रज्ये च गुणकौ। अतस्तयोरपि घातो गुणकारः। भभिनवेन्दूनां फलं रवेर्विकलाः। एवं चन्द्रस्यापि नवनववेदैर्विकलान्तरेण त्रैराशिकद्वयात् फलम्। तच्च प्राक्कपालस्थे रवौ विशोध्यते यतः सामान्येन पञ्चगुणा इति द्युदलपरिधेः फलमुपनिबद्धाः। तच्च केन्द्रपदवशात् चयधनधनह्रान्यात्मकं ग्रहे कृतमस्ति। तत्र प्राक् कपाले द्युदलपरिधेः सकाशादधिकस्तात्कालिक ऋणपरिधिस्तन्मध्याह्नपरिधिना स्वल्पमृणं कृतं तदुपचीयते। येन तत्कालपरिधिना स्फुटो रविर्भवति। धनपरिधेस्तूनोऽतो मध्याह्नपरिधिना यदधिकं धनं कृतं तद्विशोध्यते। पश्चात्कपालस्थिते तु वैपरीत्यमतो धनं क्रियते। चन्द्रस्य तु ऋणकेन्द्रेऽन्यथा। यतः प्राक्कपाले दिनार्द्धपरिधेरूनस्तत्कालपरिधिरतो यदधिकमृणं कृतं तत्पुनर्दीयते। अपरकपाले तु वैपरीत्यमिति। धनकेन्द्रे तु कपालद्वयेऽपि हीनो मध्याह्नपरिधेः सकाशात्तत्कालपरिधिरतो यदधिकं कृतं तद्विशोध्यते। येन तत्कालपरिधिस्फुटश्चन्द्रो भवति।

अथ भुक्तिफलसंस्कारवासना। तत्र रवेः केन्द्रप्रथमपदे षड्राश्यूनत्वादृणपरिधिना फलोत्पत्तिस्तस्य च प्राक्कपालस्थस्य दिनार्द्धपरिधेः सकाशादधिकस्तात्कालिक ऋणपरिधिरतो दिनार्द्धपरिधिनाऽल्पमृणं कृतं तिष्ठति। अतः फलान्तरविकलाः स्फुटभुक्तेर्विशोध्यन्ते। द्वितीयपदे तु भुक्तौ फलं धनं कृतमस्ति। तत्र दिनार्द्धपरिधिना तत्कालपरिधिरेव न्यूनोऽतोऽल्पं धनं कृतम्। ततः फलविकलास्तत्र दीयन्ते। तृतीयेऽपि पदे भुक्तौ फलं धनं कृतमस्ति दिनार्द्धपरिधिना। धनपरिधिश्च तृतीये पदे षड्राश्यधिकत्वात् केन्द्रस्य तत्कालपरिधिश्च दिनार्द्धपरिधेः सकाशादूनोऽतो यदधिकं धनं कृतं तद्विशोध्यते। चतुर्थपदे तु भुक्तावृणं फलं कृतमस्ति दिनार्द्धपरिधिना। तस्माच्च तत्कालपरिधिरल्पोऽतोऽधिकमृणं प्राक् कृतं ततस्तदन्तरं पुनर्दीयते। एवं रवेः प्राक्कपालस्थस्य प्राग्वद्भुक्तौ विकलाफलसंस्कार उपपन्नः। पश्चात्कपालस्थस्य तु विकलाधनर्ण-

परिधिप्रमाणवैपरीत्यादुक्तवैपरीत्येन भुक्तौ विकलासंस्कारो युज्यते। चन्द्रस्य तु पश्चात्कपालस्थस्य प्राग्वत् भुक्तौ विकलासंस्कारो यथा। रवेः प्राक्कपालस्थस्य भुक्तौ विकलाधनर्णकल्पनैवं चन्द्रस्यापरकपाले परिधिप्रमाणस्य। हीनाधिकत्वसादृश्यात् प्राक्कपालस्थेऽपि चन्द्रे प्रथमे केन्द्रपदे यत् षड्भाश्यूनत्वात् केन्द्रस्य ऋणपरिधिना फलोत्पत्तिस्तत्र दिनार्द्धपरिधेरूनस्तात्कालिक ऋणपरिधिरतो दिनार्द्धपरिधिना बह्वृणं कृतं तदन्तरं विकलासंस्कारेण दीयते। द्वितीयपदे भुक्तिफलस्य धनत्वात् दिनार्द्धपरिधिना यद्धनं कृतं तद्बहु कृतम्। यस्माद् दिनार्द्धपरिधेस्तत्कालपरिधिरूनोऽतो यदधिकं धनं कृतं तद्विशोध्यते। तृतीयपदे द्वितीयपदवत्। धनत्वात् भुक्तिफलस्योनत्वाच्च तत्कालपरिधे ऋणमेवान्तरफलम्। चतुर्थपदे प्रथमपदवत्। ऋणत्वाद्भुक्तिफलस्य हीनत्वाच्च तत्कालपरिधेरन्तरं विकलाफलं धनमेवेत्युपपन्नम्।

अथ प्रकारान्तरेण नतविकलानयनं तत्रैवार्ययाह।

फलनतजीवाघाताद्रविशशिनोर्वा विलिप्तिकालब्धिः।
गुणदिग्भि१०३रेकरन्ध्रै९१र्धनहानौ पूर्ववत् तासाम्॥

फलं च नतजीवा च तयोर्घातस्तस्माद्रविशशिनोर्यथासङ्ख्यं गुणदिग्भिरेकरन्ध्रैश्च विलिप्तिकानां या लब्धिर्भवति। अयमर्थः। स्पष्टीक्रियमाणस्य रवेश्चन्द्रस्य च यत् स्वस्वभुजफलं तदिह फलमुच्यते। ततो रविफलस्य तिथ्यन्तनतोत्क्रमज्यायाः यो घातः स त्र्युत्तरशतेन१०३ भाज्यश्चन्द्रस्य तु फलनतज्याघात एकनवत्या ९१ फलं विकला लभ्यन्ते। एवं रविभुक्तिफलनतज्याघातं गुणदिग्भिर्भजेच्चन्द्रभुक्तिफलनतज्याघातमेकरन्ध्रैर्लब्धं भुक्तिविकलाः। धनर्णसंस्कारश्च तासां ग्रहयोस्तद्भुक्त्योश्चोक्तवद्विधेय इति।

अत्र वासना। रवेः खमध्याक्रान्तस्योदयास्तयोश्च परिध्यन्तरेण प्राग्वत्फलान्तरम् १९१ अनेन प्रथमत्रैराशिकम्। यदि रवेः

परमफलस्यास्य १३०।४८ शशिनवेन्दु १८१ संख्यमन्तरं तदिष्टभुजफलस्य कियदिति। ततो द्वितीयं त्रैराशिकम्। यदि त्रिज्यातुल्यनतज्यायामेतदन्तरं तदेष्टनतज्यायां कियदिति। अत्र प्रथमे परमफलं भागहारो द्वितीये त्रिज्या। अनयोर्घात: १८६२२० भागहार:। तथा चन्द्रस्य प्रथमे भुजफलं गुणको द्वितीये नतज्या। अनयोरपि घातो गुणक:। शशिनवेन्दवस्य गुण्यराशिरनेन भागहारेऽपवर्त्तितेऽङ्काभ्यधिकतया जातो रविभाजको गुणदिश:। एवं चन्द्रस्यापि परमफलेनानेन ३०२।१० प्राग्वत् त्रैराशिकद्वये कृते त्रिज्यापरमफलघातो ४५३२५ ऽस्य नवनववेदैरपवर्त्तने जातश्चन्द्रभाजक एकरन्ध्राणीति।

अथ तत्कालपरिधिना स्फुटौ यौ रविचन्द्रौ तयोस्तिथ्यन्तकाले समलिप्तीकरणायार्यापूर्वार्द्धमाह।

**रविचन्द्रौ समलिप्तौ तिथिगतगम्यघटिकाफलोनयुतौ।**

तिथे: पौर्णमास्यन्तस्याद्ध राते उदयेऽस्ते वा यत्कालिकौ स्फुटग्रहौ तस्मात् कालाद्यावत्यो घटिका गता गम्या वा तासां यत् फलं तेन यथासंख्येनोनयुतौ सन्तौ तिथ्यन्तकालिकौ समलिप्तौ भवत:। एतदुक्तं भवति। आसन्नपौर्णमास्यन्तकालिकौ रविचन्द्रौ सभुक्तिकौ स्फुटौ नतविकलाभि: संस्कृत्य ताभ्यां तिथ्यन्तमानयेत्। स तिथ्यन्त: स्वकालाद्यदि गतो भवति तदा गता घटिका ग्राह्या:। गम्यश्चेत्तदा गम्यास्ताभिरर्केन्द्वोर्भुक्ती संगुण्य षष्ट्या भजेत्ततो यल्लब्धं कलादि फलं तेन गतघटिकोत्पन्नेन ग्रहावूनौ कार्यौ। गम्यघटिकोत्पन्नेन युतावेवं रविचन्द्रौ समलिप्तौ षड्राश्यन्तरितौ भवत:। एवं पातोऽपि गताद्गम्याद्वा स्वभुक्ते: फलमुत्पाद्य तस्य चक्रच्युतत्वाद्विपरीतं धनर्णं संस्कृत्य तात्कालिक: कार्य इति।

अत्र वासना त्रैराशिकेन स्पष्टैव। यदि षष्ट्या घटीभि: स्वभुक्तितुल्या लिप्ता भवन्ति तदैताभिर्गताभिर्गम्याभिर्वा कियत्य इति।

अथ समलिप्तचन्द्रस्य स्वकक्षाप्रदेशे रविमण्डलस्थस्यापमण्डलेन सह यावान्विप्रकर्षः स विक्षेप इत्युच्यते। तदानयनमुत्तरार्यार्द्धेनाह।

**पातोनचन्द्रजीवा विक्षेपो नवगुणेषुहृता ॥१॥**

पातेनोनः पातोनः स चासौ चन्द्रश्च तस्य जीवा। अयमर्थः। तात्कालिकचन्द्रात्तात्कालिकपातं विशोध्य शेषं केन्द्रं भुजीकृत्य ज्या ग्राह्या। सा नवगुणा पञ्चहृता च सतो कलारूपो विक्षेपो भवति। यदि पातोनः सन् चन्द्रो राशिषट्कमध्ये भवति तदा स उत्तरो भवति। राशिषट्काधिकश्चेत्तदा दक्षिण इति।

अत्र वासना। विमण्डलस्यापमण्डलेन सह यत्र सम्पातस्तस्मात् प्रदेशाद्यावति दूरे चन्द्रमा विमण्डले स्थितस्तदन्तरं पातोनचन्द्र इत्युच्यते। यतो मेषादेर्विलोमोऽपमण्डले पातो भ्रमति। स चात्र चक्रच्युतो निर्दिष्टः। खत्रिघन२७०तुल्यश्च विमण्डलापमण्डलयोः परमो विप्रकर्षः। तत्र चास्य त्रिज्यातुल्या भुजज्याऽतः पातोनचन्द्रभुजज्यया त्रैराशिकम्। यदि त्रिज्यातुल्यभुजज्यया खत्रिघनतुल्यं विमण्डलापमण्डलयोरन्तरं तदेष्टपातोनचन्द्रभुजज्यया कियदिति। अत्र भाज्यभाजकयोस्त्रिंशताऽपवर्त्तने भाज्यो नव गुणको भाजकः पञ्चक इष्टभुजज्यायाः। फलं चन्द्राध्यासितविमण्डलप्रदेशस्य तत्र प्रदेशेऽपमण्डलेन सह यदन्तरं तद्भवति। स विक्षेप उच्यते। तयोरपमण्डलविमण्डलयोर्विप्रकर्षात्! प्रथमविमण्डलापमण्डलसम्पातात् प्रथमं विमण्डलार्द्धमपमण्डलादुत्तरेण यतोऽतस्तत्र सौम्यो विक्षेपो द्वितीयसम्पाताच्च द्वितीयमर्द्धं दक्षिणेनातस्तत्र दक्षिण इति।

अथ रविचन्द्रयोर्बिम्बमानानयनमार्यापूर्वार्धेनाह।

**एकादशदशगुणिते हृते नखैः२० स्वरजिनै२४७र्गती माने।**

अधिकृतयो रविचन्द्रयोर्ये स्वे गती ते यथाक्रममेकादशदशगुणिते सती यथासङ्ख्यं नखैर्विंशत्या स्वरजिनैः सप्तचत्वारिंशदधिकशतद्वयेन हृते बिम्बयोर्माने भवतः।

अयमर्थः । रविभुक्तिमेकादशहतां नखैर्भजेल्लब्धं कलादि रविविम्बमानं भवति । चन्द्रभुक्तिं च दशाहतां स्वरजिनैर्भजेल्लब्धं कलादि चन्द्रबिम्वमानं भवति ।

अत्र वासना । पूर्वस्थैव ग्रहस्य स्वकक्षास्थस्य योजनात्मिका दिनगतिः पादोननवशरवसुरुद्राः ११८५८।४५ ।

यथा— एकादशसहस्राणि शतान्यष्टौ समा गतिः ।
पादोनैकोनषष्टिश्च सर्वेषां योजनात्मिका ॥

रविबिम्बमानयोजनानि ६५२२ चन्द्रबिम्बमानम् ४८० भूगोलव्यासः १५८१ । तथा च ब्रह्मसिद्धान्ते ।

मृद्दहनजलमयानां विष्कम्भा योजनैः क्रिनेन्दूनाम् ।
शशिवसुतिथिभिर्यमपक्षशररसैः शून्यवसुवेदैः ॥

एवं सति त्रैराशिकम् । यद्येकदिनगतियोजनै रवेः स्वभुक्तितुल्या लिप्ता भवन्ति तद्बिम्बमानयोजनैः किमिति । अत्र द्विनवशरैः ५९२ गुणकभाजकयोरपवर्त्तने जातो गुणकः ११ भाजकः २० रविभुक्तिश्च गुण्यराशिः फलं रविबिम्बमानलिप्तास्ताश्च मध्यमभुक्त्या मध्यमाः स्फुटभुक्त्या स्फुटा इति । एवं चन्द्रस्यापि त्रैराशिकेन गुणकभाजकयोर्वसुवेदैरपवर्त्तने जातो गुणको दशको भाजकः स्वरजिना इति भुक्तिश्च गुण्या फलं चन्द्रबिम्बमानलिप्ता इति ।

अथ चन्द्रकक्षाप्रदेशे भूच्छायामानलिप्तानयनमुत्तरेणार्यार्द्धेनाह ।

**तत्वाष्टगुणितभुक्त्योः षष्ट्या हृतमन्तरं तमसः *॥२॥**

अधिकृतरविचन्द्रभुक्त्योस्तत्वैः पञ्चविंशत्याऽष्टभिश्च यथाक्रमं गुणितयोर्यदन्तरं तत् षष्ट्या भक्तं तमसो राहुरूपस्य भूच्छायाव्यासस्य मानलिप्ता भवन्ति ।

---

* अत्रोपपत्तिः । भानोर्गतिः शरहता रविभिर्विभक्ता चन्द्रस्य लोचनगुणा तिथिभाजिता च । लब्धान्तरं भवति वाऽवनिभाप्रमाणमिति भास्करैविधिना राहुबिं $= \frac{२ \text{ चंग}}{१५} - \frac{५ \text{ रग}}{१२}$
$= \frac{८ \text{ चंग} - २५ \text{ रग}}{६०}$ इति ।

अत्र वासना। भूव्यासार्द्धेन च दीपच्छायागणितवत्। तत्र रविविम्बस्य यद्व्यासार्द्धं स दीपोच्छ्रायो योजनकर्णश्च दीपतलशङ्कुतलान्तरम्। भूव्यासार्द्धं शङ्कुः। ततो दीपतलशङ्कुतलयोरन्तरमिष्टप्रमाणशङ्कुगुणं दीपशिखौच्च्याच्छङ्कुं विशोध्य शेषोद्धृतं छायेति। सूच्यग्राया भूच्छायायाः प्रमाणं भवति। तच्च यथा।

यमयुगावनिनन्दकृपाणयः २१९१४२
समुदयादवनीतलमध्यतः।
रविकरावरणस्य वशादियं
निगदिता मुनिभिर्द्धरणीप्रभा॥ †

अत्र चन्द्रकक्षाप्रदेशे भूच्छायाव्यासस्य प्रमाणं ज्ञेयमस्ति। तत्र रविबिम्बे रवियोजनकर्णश्छाया रविभूव्यासार्द्धान्तरं कोटिः। भूमौ च चन्द्रयोजनकर्णच्छायायाः भूव्यासार्द्धचन्द्रकक्षाप्रदेशजभूच्छायाव्यासार्द्धयोरन्तरं कोटिरेवं स्थिते त्रैराशिकम्। यदि रवियोजनकर्णतुल्यायाः छायाया रविभूव्यासार्द्धान्तरतुल्या कोटिस्तच्चन्द्रयोजनकर्णतुल्यायाः कियतीति फलं भूव्यासार्द्धचन्द्रकक्षाप्रदेशजभूच्छायाव्यासार्द्धयोरन्तरं योजनरूपं तद्भूव्यासार्द्धादपास्य शेषं द्विगुणं चन्द्रकक्षाप्रदेशे भूच्छायाव्यासो भवति। एवं चेतसि संस्थाप्य ग्रन्थकृता गुण्यराशिर्द्विगुण एवापवर्त्य निर्दिष्टः। फलमपि सकलादेव भूव्यासाच्छोध्यत इति! तत्र गुण्यराशौ रविभूव्यासान्तरं योजनरूपं रूपवेदनवाब्धयः ४९४१ कर्णयोश्च स्थाने भुक्तिः प्रकल्पिता।

* अत्र भूव्यासः १५८१ रविबिम्बव्यासः ६५२२ खण्डखाद्यकवासनाभाष्यमतेन रविकर्णः खागाश्ववेदाष्टरससंख्यः ६८४८७०। अथात्रैव प्रतिपादिते चित्रे भूव्यासार्धेन-रविबिम्बव्यासार्धेन रविकर्णो लभ्यते तदा भूव्यासार्धेन किमिति सूच्यग्राया भूच्छायाया मानं भवतीति

$$\frac{\text{रक} \times \text{भूव्या} \frac{१}{२}}{\text{रविंव्या} \frac{१}{२} - \text{भूव्या} \frac{१}{२}} = \text{सूची} = \frac{६८४८७० \times १५८१}{४९४१} = २१९१४२$$ अत उपपन्नम्

यमयुगावनिनन्द कृपाणय इति।

कर्णवशाद्धि भुक्तेर्महत्त्वलघुत्वे भवतोऽतो मानान्तरत्वादत्रास्त्यैराशिकम्। यतो महति कर्णे लघ्वी भुक्तिर्लघौ च महतीति। एवं स्थिते रविभुक्तेः कर्णव्यासान्तरं गुणकश्चन्द्रभुक्तिश्च भाजकः। फलं योजनरूपं तच्चन्द्रकक्षासम्बन्धत्वात्पञ्चदशभक्तं लिप्तीभवत्यतश्चन्द्रभुक्तिरेव पञ्चदशहता भाजकोऽत्रासन्नापवर्त्तकेन मुनिनन्देन्दुभि१८७रपवर्त्तने रवेर्भुक्तेस्तत्वानि २५ गुणको भाजकः षष्टिः ६० । फलं लिप्तारूपं चन्द्रकक्षाप्रदेशे भूव्यासस्य भूच्छायाव्यासस्य चान्तरं तच्च भूव्यासरूपलिप्ताभ्यो विशोध्यते। अतो भूव्यासस्य लिप्तीकरणाय त्रैराशिकम्। यदि दिनगतियोजनैर्वसुशराष्टरुद्रै११८५८श्चन्द्रमध्यमभुक्तितुल्या लिप्ता भवन्ति तद्भूमेर्व्यासयोजनैरिन्दुवसुतिथिभिः १५८१ कियत्य इति। अत्र पूर्वापवर्त्तकेन १८७ गुणकभाजकयोरपवर्त्तने गुणको वसवो भाजकः षष्टिरेवं भूव्यासलिप्ता भवन्ति। अत्र त्वाचार्येण गुण्यगुणवधयोरेवान्तरं निबद्धं भाजकस्य तुल्यत्वादित्युपपन्नम्।

अथ मध्यग्रहणग्रासलिप्ताप्रमाणानयनमाह।

विक्षेपं संशोध्य प्रमाणयोगार्द्धतस्तमश्छन्नम्।
सर्वग्रहणं ग्राह्यादधिके खण्डग्रहणमूने ॥३॥

चन्द्रग्रहणे चन्द्रो ग्राह्यो भूच्छाया ग्राहिका। रविग्रहणे रविर्ग्राह्यश्चन्द्रो ग्राहक इति। इतरग्रहाणां तु यो यस्मादूनभुक्तिः स तस्मादुपर्यत ऊर्द्ध्वस्थो ग्राह्यः। अधःस्थो ग्राहक इति। ततो ग्राह्यप्रमाणादधिके सर्वग्रहणं ज्ञेयमूने तु खण्डग्रहणम्। अथ मानैक्यार्द्धाद्विक्षेपो न शुद्ध्यति तदा ग्रहणाभावो विपरीतशोधने कृते यदवशिष्यते तत्तयोर्बिम्बकेन्द्रान्तरं कलात्मकं भवति। कलानां सार्द्धद्वयेन सार्द्धद्वयेनाङ्गुलं ज्ञेयमिति।

अत्र वासना! अपमण्डले रवेः सदैवार्द्धचक्रान्तरिता भूच्छाया भ्रमति। चन्द्रोऽपि मध्यग्रहणकाले रवेरर्द्धचक्रान्तरित एव विम-

ण्डलेऽतस्तयोश्चन्द्रभूच्छाययोरपमण्डलपूर्वापरया तुल्यत्वं केवलं विमण्डलापमण्डलान्तरकृतो दक्षिणोत्तरभेदो विक्षेपश्च तावानेवोच्यते। तेन यदा ग्राह्यग्राहकबिम्बमानैक्यार्द्धतुल्यो विक्षेपो भवति तदा छाद्यच्छादकबिम्बयोः परिधिसम्पर्क एव। यतस्तयोर्बिम्बकेन्द्रान्तरं तदा तावदेव भवत्यथ मानैक्यार्द्धादधिको विक्षेपस्तदा तत्परिध्योरपि सम्पर्को न भवेद्यदा तु मानैक्यार्द्धादूनो विक्षेपस्तदा तत्परिध्योः परस्परमनुप्रवेशो भवेत् स च कियानिति विक्षेपमानैक्यार्द्धयोरन्तरेण तत्प्रमाणमानीयते। स ग्रास इत्यभिधीयते। वृत्तद्वयशरयोः सम्पात इत्यर्थः। यदा त्वनुप्रवेशो ग्राह्यबिम्बादधिकस्तदा ग्राहको ग्राह्यबिम्बं सकलमपि संछाद्यावतिष्ठते। तत्सर्वग्रहणमुच्यते। न्यूने चानुप्रवेशे खण्डग्रहणमिति।

अथ ग्रासस्य स्थित्यर्द्धविमर्दार्द्धयोरानयनमाह।

**छाद्यार्द्धेन च्छादकदलस्य युक्तोनकस्य वर्गाभ्याम्।**
**विक्षेपकृतिं प्रोह्य पदे तिथिवत् स्थितिविमर्दार्द्धे ॥४॥**

छादकग्रहस्य बिम्बमानार्द्धं स्थानद्वये संस्थाप्य छाद्यग्रहबिम्बमानार्द्धेन एकत्र युक्तमन्यत्रोनं कार्यम्। तस्य राशिद्वयस्य पृथक् पृथक् वर्गं विधाय तस्मात् पृथक् पृथक् तात्कालिकविक्षेपवर्गं संशोध्यावशेषयोः पदे ग्राह्ये। ताभ्यां तिथिवद्यथासंख्येन स्थित्यर्द्धविमर्दार्द्धे भवतः। यत्र छाद्यार्द्धयुतच्छादकार्द्धवर्गाद्विक्षेपवर्गं विशोध्य मूलं तिथिवत् कृतं तत्र स्थित्यर्द्धघटिका भवन्ति। छादकश्छाद्यमण्डले यावत्कालं तिष्ठति स स्थितिकालः स्पर्शमोक्षयोरन्तरं तस्यार्द्धं स्थित्यर्द्धः। प्रग्रहणमध्यग्रहणयोर्मध्यग्रहणमोक्षयोर्वाऽन्तरमित्यर्थः। यत्र च छाद्यार्द्धोनछादकदलवर्गविधिना घटिका भवन्ति तत्र विमर्दार्द्धम्। निमीलनोन्मीलनयोरन्तरे बिम्बस्य सर्वग्रस्तस्यादर्शनकालो विमर्दशब्देनोच्यते। तस्यार्द्धं

विमर्दार्द्धम्। मध्यग्रहणनिमीलनयोर्मध्यग्रहणोन्मीलनयोर्वाऽन्तरमित्यर्थः। अत्र छाद्यार्द्धोनच्छादकार्द्धवर्गाद्विक्षेपवर्गो न शुद्ध्यति तदा विमर्दाभावात् सर्वग्रहणाभावे खण्डग्रहणं वाच्यमिति।

अत्र वासना। समयां भुवि इष्टप्रमाणं वृत्तमालिख्य दिगङ्कितं कुर्यात्तत्र या पूर्वापरा साऽपमण्डलरेखा। ततो वृत्तमध्यविन्दुतो याम्योत्तररेखायां तद्वृत्तपरिणतं माध्यग्रहणिकं विक्षेपं यथादिशं प्रसार्य तदग्रे विन्दुर्देयस्ततो विक्षेपाग्रविन्दुमस्तकावगाहि पूर्वापरायतं सूत्रं प्रसार्य रेखां कुर्यात्सा विमण्डलरेखा। ततोऽपमण्डलमध्यविन्दुं मध्ये कृत्वा भूच्छायामानार्द्धेन वृत्तमालिखेत्तद्भूच्छायाविम्बं यो भूस्थे राहुरित्यभिधीयते। तथा विमण्डलमध्यविन्दुं मध्ये कृत्वा चन्द्रमानार्द्धेन यद्वृत्तमुत्पाद्यते तच्चन्द्रविम्बम्। तथास्थितयोर्बिम्बयोर्यः परस्परमनुप्रवेशः स मध्यग्रहणग्रासो यच्च केन्द्रान्तरालं स मध्यग्रहणविक्षेपः। एवमवस्थिते प्रग्रहणकाल आनीयते। प्रग्रहणेऽवश्यं बिम्बयोः केन्द्रान्तरालं मानैक्यार्द्धतुल्यं भवति। यतस्तदा बिम्बपरिध्योः सम्पर्कः। शशिबिम्बमध्यं चावश्यं विमण्डले मध्यग्रहणमतोऽपरेण भवत्यतो मानैक्यार्द्धतुल्यकेन्द्रान्तरालं कर्णो विमण्डलापमण्डलान्तरं कोटिर्विक्षेपतुल्या मध्यग्रहणे बिम्बकेन्द्रान्तरालमित्यर्थः। ततः कर्णकृतेः कोटिकृतिं विशोध्य मूलं गृह्यते। स भुजस्तेन च कालानयने त्रैराशिकम्। यदि भुक्त्यन्तरतुल्येन भुजेन षष्टिर्घटिकास्तदनेन भुजेन कियत्य इति। लब्धं प्रग्रहणकाले स्थित्यर्द्धघटिकाः। मोक्षेऽप्येवम्। मध्यग्रहणविन्दोः पूर्वेण चन्द्रविम्बमध्यविन्दुं कृत्वा वासनां प्रदर्शयेत्। अथ विमर्दार्द्धेन निमीलनकालस्तत्रावश्यमेव ग्राह्यग्राहकविम्बकेन्द्रयोरन्तरं मानान्तरार्द्धतुल्यम् तत्र निमीलनप्रदेश ग्राहकमध्यविन्द्वोरन्तरं ग्राहकार्द्धम्। निमीलनप्रदेशग्राह्यमध्यविन्द्वोरन्तरं ग्राह्यार्द्धम्। तयोरन्तरं विम्बकेन्द्रान्तरालमेव। स एव कर्णः। कोटिश्च तात्कालिकविक्षेपस्तयोर्वर्गान्तरमूलं भुजः। ततः स्थित्यर्द्धवद्विमर्दार्द्धानयनमेवमुन्मीलनेऽपि वासनां प्रदर्शयेदिति॥

अथ माध्यग्रहणिकविक्षेपेण ये स्थित्यर्द्धविमर्दार्द्धे आनीते ते स्थूले विक्षेपस्य प्रतिक्षणमन्यथात्वादतस्तात्कालिकविक्षेपेण तयोः स्फुटीकरणायार्यामाह।

**भुक्तिः षष्टिहृता स्थितिविमर्दंदलनाडिकागुणाऽर्केन्द्वोः।**
**आदावृणमन्ते धनमसकृत्तेनान्यथा पाते ॥५॥**

अर्केन्द्वोर्या स्फुटा भुक्तिः सा स्थित्यर्द्धविमर्दार्द्धघटिकागुणा सती षष्ट्या हृता कार्या। ततो लब्धं यत्कलादि फलं तन्मध्यग्रहणादादौ प्रग्रहणे निमीलने च समलिप्तयो रवीन्द्वो ऋणमन्ते चोन्मीलने मोक्षे च धनं कार्यमेवं तौ तात्कालिकौ भवतस्ते च ऋणधने पातेऽन्यथा आदौ धनमन्ते च ऋणं तस्य चक्रच्युतत्वादिति। अत्र च रविस्तात्कालिकीकरणमर्कग्रहणापेक्षयोक्तम्। तत्रैवोपयोगित्वादत्र तु चन्द्रपातयोरेव तात्कालिकत्वमुपपन्नम्। तात्कालिकविक्षेपस्यैव साध्यत्वादतस्तदेव कार्यम्। तच्च कर्मासकृदेतदुक्तं भवति। प्रग्रहणकालेऽन्विष्यमाणे मध्यग्रहणस्थित्यर्द्धेनेन्दोः फलमुत्पाद्य तत्समलिप्तेन्दोः ऋणं कार्यम्। पातस्य च स्वफलं धनमेवं तौ तात्कालिकौ भवतः। ताभ्यां विक्षेपः कार्यः। ततस्तद्वर्गं मानैक्यार्द्धवर्गादपास्य शेषस्य यन्मूलं तस्मादुक्तविधिना स्थित्यर्द्धं तस्मात्पुनः फलमित्यादि तावद्यावत् स्थित्यर्द्धं स्थिरीभवति। स तु ग्रहणस्य स्फुटः कालो मध्यग्रहणात् प्राक्। एवं मध्यग्रहणविमर्दार्द्धेन फलम्। एवमेव विमर्दार्द्धं स्थिरीकृत्य निमीलनकालः साध्यः। एवमेव मध्यग्रहणविमर्दार्द्धेन फलमुत्पाद्य तत्समलिप्तेन्दोर्द्धनं पाते च ऋणं कृत्वोन्मीलनकालः साध्यः। तथा मध्यग्रहणस्थित्यर्द्धेन फलमुत्पाद्य तत्समलिप्तेन्दोर्द्धनं पाते च ऋणं विधाय तस्मादुक्तविधिना स्थित्यर्द्धं स्थिरीकृत्य मोक्षकालः साध्योऽत्र फलानयने त्रैराशिकेन वासना स्पष्टैव। स्थित्यर्द्धविमर्दार्द्धानयने च विक्षेपकोटेः प्रतिक्षणमन्यत्वादसकृत्करणमुपपन्नमिति॥

अथ मध्यग्रहणादीनां कालप्रतिपादनार्थमुत्तरे आर्यामाह,—

स्फुटतिथ्यन्ते मध्यं प्रग्रहणं स्थितिदलोनकेऽभ्यधिके ।
मोक्षो निमीलनोन्मीलने विमर्दार्द्धहीनयुते ॥

स्फुटो नतविकलासंस्कृतरविचन्द्रयोर्जातः स चासौ तिथिश्च तस्यान्तेऽवसाने मध्यं मध्यग्रहणम् । यदैव स्फुटतिथेरन्तस्तदैव मध्यग्रास इत्यर्थः । तस्मिंश्च स्फुटतिथ्यन्ते स्वयं स्थिरस्थित्यर्द्धेनोने सति प्रग्रहणं स्पर्शो भवेदधिके च मोक्षो ग्राह्यग्राहकविम्बपरिध्योर्विश्लेषः । एवं स्फुटतिथ्यन्ते स्वविमर्दार्द्धेन हीने निमीलनं समस्तबिम्बाच्छादनं भवेदधिके चोन्मीलनं सर्वच्छन्नस्य बिम्बस्य प्रथमं परिधिदर्शनं भवेदेतत्कालपञ्चकमाचजवलनार्थमनष्टं कुर्याद्वासनाऽत्र स्पष्टैव ।

अथ स्पर्शमोक्षयोरन्तरेऽभीष्टकाले ग्रासानयनमाह,—

वीष्टस्थितिदलविक्षेपलिप्तिकावर्गयुतिपदेनोनम् ।
मानैक्यार्द्धं छन्नं मध्ये विक्षेपलिप्तोनम् ॥६॥

विगत इष्टः कालो यस्मात्तद्वीष्टं तच्च तत् स्थितिदलं च तस्य यो विक्षेपश्च तस्य लिप्तिकास्तस्योभयस्यापि या वर्गयुतिस्तस्या यत्पदं तेनोनं मानैक्यार्द्धमिष्टकाले छन्नं ग्रासप्रमाणं भवत्ययमर्थः । यदि प्रग्रहणाद्गते काले प्रश्नस्तदा प्रग्रहणस्थित्यर्द्धादथ मोक्षादर्वाक् प्रश्नस्तदा तन्मोक्षस्थित्यर्द्धादिष्टकालः शोध्यः । शेषं वीष्टस्थितिदलमुच्यते । मध्यग्रहणेष्टकालयोरन्तरमित्यर्थः । तेन चन्द्रपातभुक्ती संगुण्य षष्ट्या भजेत् । पृथक् पृथक् प्रग्रहणात् गतकालप्रश्ने समलिप्तचन्द्रो हीनः कार्यः पातश्चाधिकोऽथ मोक्षादर्वाक् प्रश्नस्तदा तत्फलेन समलिप्तचन्द्रोऽधिकः पातश्च हीनः कार्यः । ताभ्यामुक्तविधिना यो विक्षेपः सा कोटिस्तथा वीष्टस्थितिदलेन भुक्त्यन्तरं हत्वा षष्ट्या भजेत् लब्धा या लिप्तिकाः स भुज उच्यते । ततः कोटिभुजयोर्वर्गयोगान्मूलं कर्णो

भवेत्। तेन कर्णेनोनं मानैक्यार्द्धमिष्टकाले छन्नं ग्रासो भवेत्। मध्यग्रहणे तु विक्षेपलिप्ताभिरूनं मानैक्यार्द्धं छन्नं भवेत्। इदं पुरोमन्यायितमिव लक्ष्यते। मध्यग्रहणच्छन्नस्य प्राक् प्रतिपादितत्वात्।

अत्र वासना। मध्यग्रहणप्रग्रहणयोर्मध्यग्रहणमोक्षयोर्वा यदन्तरं ताः स्थित्यर्द्धघटिकास्ताभ्यो यदेष्टघटिका विशोध्यन्ते तदा शेषा इष्टकालमध्यग्रहणयोरन्तरघटिका भवन्ति। ताभिस्त्रैराशिकेन भुजानयनम्। यदि घटिकाषष्ट्या भुक्त्यन्तरतुल्या रविचन्द्रयोरपमण्डलगत्या बिम्बकेन्द्रान्तरालं भुजा तदेताभिरिष्टकालमध्यग्रहणान्तरघटिकाभिः कियतीति। फलं कलारूपमिष्टकालिकयो रविचन्द्रयोरपमण्डलगत्या बिम्बकेन्द्रान्तरालं पूर्वापरं भुजरूपं भवेत्। इदं च रविग्रहणे। चन्द्रग्रहणे च भूच्छायैव रविशब्देनोपचर्यते। तद्गत्यैव तस्याः षड्राश्यन्तरिताया अपमण्डले प्राङ्मुखभ्रमणादतस्तावतीभिरेव घटिकाभिर्यस्तात्कालिको विक्षेपः सा कोटिस्तत्कालं विमण्डलापमण्डलयोर्याम्योत्तरमन्तरमित्यर्थः। तयोर्वर्गयुतिमूलं स कर्णो ग्राह्यग्राहकबिम्बयोस्तात्कालिकं केन्द्रान्तरं तिर्यग् भवति। स च मानैक्यार्द्धादवश्यमल्पो भवति। यतस्तत्र काले बिम्बयोः परस्परमनुप्रवेशः कियानपि भवति। अतो मानैक्यार्द्धेन सहान्तरे कृते तात्कालिको ग्रासो भवति। मानैक्यार्द्धतुल्ये कर्णे तु परिध्योरेव सम्पर्काद्ग्रासाभावोऽधिके तु महदन्तरं स्यात्। मोक्षप्रश्नेऽप्येवं योज्यम्। एतच्चेष्टग्रासप्रमाणं ज्ञातं ग्रस्तोदितग्रस्तास्तमितयोरुपयुज्यते। अत्र तु वस्तुप्रदर्शनमेवाचार्येण कृतमिति। निमीलनोन्मीलनविमर्दार्द्धाद्यावत्साध्यते तावद्ग्राह्यमानार्द्धतुल्यमन्तरमवशिष्यते। तत्र च ग्राह्यमानार्द्धं यावद्योज्यते तावद्ग्राह्यबिम्बार्द्धं द्विगुणं भवति। तावांश्च ग्रासस्तदेति।

अत्र च भुजानयनादिकर्मक्रमायोत्तरे श्लोकौ,—

वीष्टस्थितिदलक्षुण्णभुक्त्यन्तरकला हृताः ।
षष्ठ्या भुजो लिप्तिकाद्यः क्षेपः कोटिः श्रुतिस्ततः ॥
निमीलने विमर्दार्द्धात्तथैवोन्मीलनेऽपि च ।
कोटिदोःश्रुतयः कार्या वीष्टस्थितिदलाद्यथा ॥१॥

इष्टग्रासाच्च कालानयनं वैपरीत्येनैव सिद्धं यथा तत्रैव श्लोकौ,—

ग्रासोनमानयोगार्द्धक्षेपवर्गान्तरात्पदम् ।
तिथिवद् ग्रासतः श्लिष्टः कालः स्यात्स्पर्शमोक्षयोः ॥
विशोधयेन्निजात्तत्तु स्थित्यर्द्धात्स्पर्शमोक्षतः ।
मोक्षादर्वाक् स्थिरः स्यात्तु तत्कालक्षेपतोऽसकृत् ॥२॥

अथ ग्रहणयोः प्रग्रहणादिकालेष्वाक्षजायनवलनद्वययोरानयनमाह,—

**त्रिज्याप्तचापभागैर्नताक्षजीवावधादुदग्याम्यैः ।**
**पूर्वापरयोः पूर्वा त्रिभयुग्ग्राह्यायनांशैश्च ॥७॥**

नतं चाक्षश्च तयोर्जीवे तयोर्वधात् त्रिज्यया यदाप्तं तस्य चापभागैस्तैश्च पूर्वापरकपालयोर्नताद्यथासंख्यमुत्तरयाम्यैरपमण्डलपूर्वा वलिता भवत्येतदुक्तं भवति । चन्द्रग्रहणे चन्द्रदिनार्द्धाद्रविरात्रार्द्धादर्कग्रहणेऽर्कदिनार्द्धात् प्रग्रहणादिकालजस्वस्वस्फुटतिथ्यन्तेभ्यः स्वं दिनार्द्धमपास्य शेषा नतघटिका भवन्ति । ताश्च प्रग्रहणादिकालेषु पञ्चस्वपि यावत्यः पूर्वाह्णेऽपराह्णे वा भवेयुस्तासामुक्तविधिनोत्क्रमेण ज्या ग्राह्या सा नतज्योच्यते । अक्षज्या च विप्रश्नोक्ता तयोर्वधं त्रिज्यया भजेद्यल्लब्धं तस्य ये चापांशास्तैः प्राक्कपालनते उत्तरैः । पश्चान्नते च दक्षिणैः सममण्डलपूर्वस्या अपमण्डलपूर्वा वलिता भवति । रवेरतीतादर्द्धरात्रात्प्रभृति प्रथमं दिनार्द्धं यावत् पूर्वकपालम् । तथा द्वितीयदिनार्द्धात् प्रभृति प्रथमरात्रार्द्धं यावदपरकपालमिति ।

अमावास्यायां तु रविचन्द्रौ सदैवैककपालगौ भवत इति। एव-माक्षा वलनांशा भवन्ति। तथा त्रिभेण राशित्रयेण युज्यते स्म त्रिभयुक् स चासौ ग्राह्यश्च तस्य ये आयनांशास्तैश्चापमण्डलपूर्वा वलति। अयमर्थः। चन्द्रग्रहणे चन्द्रो ग्राह्यो रविग्रहणे च रविस्तत्र यथासम्भवं ग्राह्ये राशित्रयं यथोत्पन्नायनांशाश्च दत्ताः। भुजीकृत्य चोत्क्रमक्रान्तिखण्डकैः क्रान्तिं कुर्यात्तां षष्ठ्या भजेदंशा भवन्ति। ते आयना अंशा भवेयुस्तद्गोलवशाच्च तेषां दिक्। तैरपमण्डलपूर्वा वलत्यत्र चन्द्रक्रान्तेर्विक्षेपेण सह योगो वा न कार्यस्तस्य स्वातन्त्र्ये-णैव मानैक्यार्द्धवृत्ते नियोच्यमाणत्वात्। एते चायनवलनांशा निरक्षे-ऽपि भवन्ति। तेषां चाक्षाणामायनानां चांशानां एकदिशां योगो भिन्नदिशां च वियोगः कार्यः। ते स्फुटा वलनांशा उच्यन्ते। तेषां या ज्या सा वलनज्या। अस्यैव कर्मक्रमस्याभिव्यक्तये उत्तरे श्लोको यथा,—

योगः समदिशां कार्यो वियोगोऽन्यदिशां ततः।
या ज्या सा वलनज्या स्यादायनाक्षजयोगजः॥

अत्र वासना। स्वदेशखाग्रन्यस्ते भगोले सममण्डलाद्विषुव-न्मण्डलं स्वाक्षभागैर्दक्षिणेन तिर्यग्भवति। यदा विषुवन्मण्डलगत्या प्राक् ग्राह्यबिम्बं नीयते तदा बिम्बवत् पूर्वा तयैव गत्या वलत्यतः सममण्डलानुसारेण ग्राह्यबिम्बे या पूर्वा तस्या उत्तरेण पारमार्थिकी पूर्वा वर्त्तते। तेन पूर्वया आक्षा वलनांशा उत्तरा भवन्ति। ते च कियन्त इति तदर्थं त्रैराशिकम्। यदि त्रिज्यातुल्यनतोत्क्रमज्यया-ऽक्षज्या वलनज्या भवति तदिष्टनतोत्क्रमज्यया कियतीति फलं वलनज्या। यतो याम्योत्तरमण्डलस्थे ग्राह्ये वलनज्याभावो विषुव-न्मण्डलसममण्डलसम्पाते त्वक्षज्यातुल्यं परमं वलनं तच्च याम्योत्तर-मण्डलात्प्रभृति उत्क्रमेणोपचीयते। अत उत्क्रमज्यया वलना-नयनमुपपन्नम्। ताश्चापांशतुल्या बिम्बपरिध्यंशा वलिता भवन्ति

वृत्तत्वाद्विम्बस्य। अथ याम्योत्तरमण्डलादपरस्यां दिशि विषुवद्वृत्त-गत्या दर्पणाकारं बिम्बं नीयते। तदा तत् पश्चिमा तयैव गत्या यात्यतो बिम्बपूर्वा पारमार्थिकी द्रष्टुः सममण्डलपूर्वातो दक्षिणेन वलति। तेनापरकपालस्थिते ग्राह्ये आक्षा वलनांशा दक्षिणा भवन्ति। तत्रापि प्राग्वदेवाक्षवलनानयनम्। एतदेव वलनं स्याद्यद्यर्कचन्द्रयोर्विषुवद्वृत्तस्थयोर्ग्रहणं भवेत्। अन्यत्र तु यथा सममण्डलाद्विषुवन्मण्डलं दक्षिणेनैवं विषुवन्मण्डलादपि तिर्यगप-मण्डलं दक्षिणेनोत्तरेण वा। ततः पूर्वागता वलनांशा उपचीयन्ते-ऽपचीयन्ते वा। तेन तत्र ग्राह्ये राशित्रयं दत्वा क्रान्त्यानयनं कार्यम्। तच्चोत्क्रमेणैव। यतो मकरादिस्थे ग्राह्ये सममण्डलानु-सारेणैव बिम्बपूर्वा कर्क्यादिस्थे च। मेषतुलादिगे तु परमक्रान्तिज्या-तुल्यं वलनम्। अतो ग्राह्ये राशित्रयं दीयते। येनायनादेर्वलना-रम्भः प्रवर्त्तते। ततश्चोत्क्रमेण वलनोपचितिर्विषुवदाद्यं यावदेवं स्थिते यदि वलनद्वयमेकदिक्कं भवेत्तदा तयोर्योग एव युज्यते। तस्यामेव दिशि बिम्बपूर्वस्या महद्वलनम्। अथ भिन्नदिक्कं तदा तयोरन्तरं युज्यते। यत एकेन बिम्बपूर्वा दक्षिणेन नीयते अपरे-णोत्तरेण ततो वलनान्तरेणैव पूर्वा वलति। स्फुटवलनांशानां च ज्या क्रियते। यतोऽनया गत्यैव व्यासार्द्धे नियोगो भविष्यति तस्मिन्नायां च दिशि विमण्डलवशाद्विक्षेपप्रवृत्तिरिति।

अथ ग्रहणोपकरणीभूतानां ग्राह्यबिम्बादिपदार्थानां कला-त्मकानामङ्गुलात्मकीकरणाय छेदानयनार्थमङ्गुलप्रमाणप्रतिपादनाय चोत्तरे आर्यामाह।

> दिनगतशेषाल्पयुतं खपादयुक्तं दिनं दिनार्द्धहृतम्।
> अङ्गुललिप्ता वितुषैर्यवोदरैरङ्गुलं षड्भिः॥

ग्राह्यदिनस्य चन्द्रग्रहणे चन्द्रदिनस्य कर्मबहुत्वात् स्वल्पान्तर-त्वाच्च तदुपेक्ष्य रविरात्रे रविग्रहणे रविदिनस्य मध्यग्रहणे काले

गतशेषं वा यत् फलं भवति तेन युतं सत् ग्राह्यदिनं स्वपादेन युक्तं विधाय स्वदिनार्द्धेन भजेत्। ततो लब्धं यत् फलं ता अङ्गुललिप्ता भवन्ति। अङ्गुलं च वितुषैः षड्भिर्यवोदरैर्भवति। वितुषाणां षसां यवोदराणां यावती भूमिर्व्याप्तिस्तावत्प्रमाणाङ्गुलपरिणतश्छेदो भवति। तेन छेदेन भक्ता ग्राह्यबिम्बादयः कलात्मका अङ्गुलत्वं प्राप्नुवन्तीत्यर्थः।

अत्र वासना। उदयकालेऽस्तकाले च क्षितिजासन्नस्य ग्रह-बिम्बस्य सार्द्धेन लिप्ताद्वये(नैकाङ्गुल*)समं मण्डलं पूर्वाचार्यैरुपलब्धम्। तत्र काले महत्वाद्बिम्बस्य। सममण्डले च सार्द्धेन लिप्तात्रयेणावान्तरे च त्रैराशिकम्। यदि दिनार्द्धतुल्येन क्षितिजादुच्छ्रयेणैका लिप्ताऽङ्गुल-लिप्तासूपचीयते तत् क्षितिजसममण्डलमध्ययोरन्तरे वर्त्तमानस्य ग्रहबिम्बस्य क्षितिजादुन्नतघटिकारूपेण स्वदिनस्य गतेन शेषेण वा कियदुपचीयत इति। लब्धं सार्द्धकलाद्वये योज्यते। अङ्गुललिप्ता भवन्ति। स छेद इत्यभिधीयते। अत्राचार्येण बुद्धिवैचित्र्यात्म-वर्णनार्थमर्द्धगुणितं यत्सार्द्धकलाद्वयं तस्यैव राशेः सपाददिनसंज्ञां प्रकल्प्य तत्रैवोन्नतकालं संयोज्य सकलोऽपि राशिर्दिनार्द्धेनैव भाजितः। एवमपि फलं तदेव भवति। अत्र ज्याक्रमेणैव बिम्बोपचितिर्भवत्यत उन्नतज्ययैव कर्म कर्त्तुमुचितम्। तथा च भास्करसिद्धान्ते। त्रिज्योद्धृतस्तत्समयोत्थशङ्कुः सार्द्धद्वियुक्तोऽङ्गुललिप्तिकाः स्युरिति। तदन्तरं स्वल्पत्वाच्च कर्मलाघवतयोपेक्षितम्। तथा प्रग्रहणादि-कालेषु पृथक् पृथक् छेदानयनस्यावकाशे लाघवायैव मध्यग्रहणिकेन व्यवहरन्ति। एतच्चाङ्गुललिप्तामानं तत्रैव यत्र स्वदिनार्द्धं सममण्डल-मध्यावगाही ग्राह्यो भवति। यत्र च सममण्डलमध्यादुत्तरेण दक्षिणेन वा नतः सन् ग्राह्यो निजं दिनार्द्धं करोति तत्र किञ्चिदूनं

* "—" इदं मूलपुस्तके नास्ति।

सार्द्धलिप्ताद्वयं खदिनार्द्धाङ्गुललिप्ताप्रमाणं भवति। एतदप्यन्तर-मुपेक्षितमिति।

अथैतेन छेदेन छिन्नानां येषामङ्गुलत्वं भवति ततो भुजानार्य-याह,—

ग्राह्यग्राहकदलतत्समासविक्षेपलिप्तिकाच्छेदः।
अङ्गुललिप्ता त्रिज्यावलनज्यानां भवेदिष्टः॥८॥

एताः प्रागानीता अङ्गुललिप्ता ग्राह्यादीनां छेदो भवति। अत्र ग्राह्यस्य ग्राहकस्य तयोर्दले तत्समासो मानैक्यार्द्धं विक्षेपोदिता एव लिप्तिका भुजस्तदुत्थत्वात्कर्णश्चेति राशयः छेदच्छिन्ना अङ्गुलात्मका भवन्ति। त्रिज्यावलनज्यानां च इष्टच्छेदो भवति। येन केनचि-दिष्टेनैकेन त्रिज्यावलनज्या छेत्तव्या। यथा मानैक्यार्द्धवृत्ताद्बहि-स्त्रिज्या भवति। स चात्र षटक् एव पूर्वगणकैर्दृष्ट इति।

अथ ग्रासादीनां दिक्परिज्ञानार्थं वलनज्याविक्षेपाणां यथा-स्थानन्यासायोत्तरे आर्याद्वयमाह,—

प्राक् प्रभृतीन्दोः पश्चादर्कस्य दिशः स्ववलनजीवाभिः।
विक्षेपा विपरीताश्चन्द्रस्य यथादिशं सवितुः॥
व्यासार्द्धे वलनज्या मानैक्यार्द्धे पृथक् स्वविक्षेपाः।
ग्राह्ये विक्षेपाग्रात्परिलेखो ग्राहकार्द्धेन॥

इन्दोश्चन्द्रस्य ग्रहणे स्पर्शादीनां दिशः स्वस्ववलनज्याभिः प्राक् प्रभृति पूर्वां दिशमारभ्य ज्ञेयाः। अर्कस्य तु पश्चात् दिशमारभ्येति। विक्षेपाश्चन्द्रस्य ग्रहणे विपरीता ज्ञेयाः। यद्युत्तरा आगतास्तदा याम्या ज्ञेयाः। याम्याश्चेदुत्तरा इति। सवितुरर्कस्य पुनर्ग्रहणे विक्षेपा यथादिशं ये उत्तरा आगतास्ते उत्तरा एव याम्याश्चेद्याम्या-एवेति। वलनज्यास्तु द्वयोरपि व्यासार्द्धे त्रिज्यावृत्ते याम्या उत्तरा

वा पूर्वस्यां यथागता देया पश्चिमायां विपरीतदिक्का इति । स्वस्व-विक्षेपाश्च मानैक्यार्द्धवृत्ते पृथक् पृथक् देयाः । ततो ग्राह्यवृत्ते स्वस्वविक्षेपाद्ग्राहकार्द्धेन ग्रासावगमाय परिलेखः कार्य इति । एत-दुक्तं भवति । सलिलसमीकृतायामवनौ बिन्दुर्देयस्तं मध्ये कृत्वा प्रथमं ग्राह्यार्द्धाङ्गुलप्रमाणकर्कटकेन वृत्तमालिखेत्तद् ग्राह्यवृत्त-मुच्यते । ततस्तमेव बिन्दुं मध्ये कृत्वा ग्राह्यग्राहकमानैक्यार्द्धाङ्गुल-प्रमाणकर्कटकेन वृत्तमालिखेत्तन्मानैक्यार्द्धवृत्तमुच्यते । तथा तमेव बिन्दुं मध्ये कृत्वा व्यासार्द्धाङ्गुलप्रमाणकर्कटकेन वृत्तमालिखे-त्तद्व्यासार्द्धवृत्तमुच्यते । एतच्च वृत्तत्रयमपि दिक्चतुष्टयचिह्नितं कुर्यात् । तत्र ग्राह्यबिम्बग्रासस्य प्रत्यक्षीकरणाय लिखितं व्यासार्द्ध-वृत्तं च क्षितिजं प्रकल्पितं तद्वशेन हि ग्रासदिक्परिज्ञानम् । तत्पूर्वापराच्च चन्द्रग्रहणे विमण्डलं तेन सक्रान्तिपमण्डलस्य यावान्-विप्रकर्षस्तावाँस्तत्र काले विक्षेपः स च यदा ग्राह्यबिम्बस्य परितो मानैक्यार्द्धतुल्यस्तदा ग्राह्यग्राहकबिम्बपरिध्योः स्पर्श एव । ऊने तु ग्राससम्भवः । तत्परिज्ञानाय मानैक्यार्द्धवृत्तं लेखनीयम् । तथा करणोत्तमे,—

ग्राह्यवृत्तं लिखेत्पूर्वं तद्वहिर्मानयोगजम् ।<br>
तद्वद्ग्रासार्द्धवृत्तं स्यात् दिक्चतुष्टयचिह्नितम् ॥

इति । तत्र व्यासार्द्धे तावद्वलनज्या देया । सा च चन्द्रग्रहण-स्पर्शसम्बन्धिनी पूर्वस्यां स्ववलनज्याप्रमाणं सूत्रं द्विगुणं कृत्वा तन्मध्ये शलाकां विन्यस्य तां पूर्वापररेखायां शरसंस्थानां विधाय तदग्रे चोभयपार्श्वयोस्त्रिज्यावृत्तपरिधिप्रापिणीं प्रसार्य ततो यद्युत्तरा तत्पूर्वापररेखाया उत्तरतो दक्षिणा चेद्दक्षिणस्यां चिह्नं कुर्यादेवं निमीलनप्रग्रहेष्टयोरपि वलनज्या पूर्वस्यामेव देया । मोक्षकालिकी च या वलनज्या सा पश्चिमायामेवमेव विपरीतदिक्का देया ।

यद्युत्तरा पूर्वापररेखाया दक्षिणस्यां दक्षिणा चेदुत्तरस्यामेवमुन्मीलने मोक्षेष्टयोरपि वलनज्या पश्चिमायामेव देया। तथा माध्यग्रहणकी या वलनज्या सा विक्षेपवशतस्त्रिज्यावृत्ते याम्योत्तरे स्वातामेवमेवोत्तरतो दक्षिणतो वा देया रविग्रहणे। चन्द्रग्रहणे तु यद्युत्तरो विक्षेपस्तदा दक्षिणस्यां दक्षिणश्चेदुत्तरस्यां चन्द्रविक्षेपाणां वैपरीत्या सा च द्वयोरपि दक्षिणा प्रदक्षिणा देया उत्तरा चेदपसव्येन सर्वेष्वपि वलनज्याचिह्नेषु ग्रासमध्यान्मानैक्यार्द्धवृत्ताव-भेदीनि सूत्राणि दद्यादिति। मानैक्यार्द्धवृत्ते च पृथक् पृथक् स्वविक्षेपा देयाः। अथ स्पर्शमोक्षभेदेन विक्षेपयोर्द्वित्वेऽपि सूर्यग्रहणापेक्षया बहुवचनम्। यत एवमेव ग्रहणद्वयस्याप्युत्तरमाचार्येणाभिहितम्। तत्र ग्राह्यबिम्बमध्यान्मानैक्यार्द्धवृत्तावभेदि यद्वलनसूत्रं त्रिज्यावृत्ते प्रदत्तमस्ति तेन सूत्रेण मानैक्यार्द्धवृत्तपरिधेर्यः प्रदेशः स्पृष्टस्तस्मात्प्रदेशाद्यथास्वं स्पर्शमोक्षीयविक्षेपौ वलनज्यावत्तत्परिधौ विपरीतदिक्कौ पूर्वापरयोर्दातव्यौ। अत्र विक्षेपस्यापात्मकोऽपि वृत्तस्याल्पत्वेन स्वल्पान्तरत्वात्तत्पूर्वसूरिभिः कोटिरूपो ज्यावन्नियोजितः। स च विपरीतदिक्को यतोऽपमण्डलस्था भूच्छाया विमण्डलस्थं चन्द्रं विक्षेपाल्पत्वाच्छादयति। ततो यदा विमण्डलमपमण्डलादुत्तरेण भवति तदा चन्द्राद्दक्षिणेन स्थिता भूच्छाया दक्षिणेन बिम्बखण्डनामुत्पादयति। अथ दक्षिणेन विमण्डलं तदाऽपमण्डलस्था भूच्छाया चन्द्रादुत्तरेण स्थितोत्तरेणैव बिम्बखण्डनां करोत्यतश्चन्द्रग्रहणे विक्षेपाणां वैपरीत्यम्। रविस्त्वपमण्डलस्थस्य यस्यामेव दिशि विमण्डलस्थश्चन्द्रस्तस्यामेव दिशि ग्रासो यतोऽस्य चन्द्र एव छादक इति यथादिशमेव विक्षेपदानम्। मध्यग्रहणविक्षेपश्च ग्राह्यबिम्बमध्यात्स्ववलनमार्गेण देयो विक्षेपाग्रेषु च चिह्नानि कुर्यात्। तदग्रयोर्ग्राहकार्द्धप्रमाणकर्कटकेन वृत्तान्यालिख्य स्पर्शमोक्षयोर्मध्यग्रहणे च ग्रासदिक्परिज्ञानं कार्यमिति। प्रग्रहेष्ट निमीलनयोश्च पूर्वस्यां दिशि ग्राह्यबिम्बमध्यात् स्ववलनमार्गेण

वाहुर्देय: । बाहुग्राच्च कोटिरूपो विक्षेपो व्यस्तदिक्को देयो ग्राह्यबिम्ब-मध्याच्च कोट्यग्रस्पर्शी कर्णस्तत्रोभयत्र कोट्यग्रकर्णयोः सम्पात-स्तस्मात् प्रदेशात् ग्राहकमानार्द्धेन वृत्तमालिख्य निमीलनप्रग्रहेष्ट ग्राससंस्थानं कुर्यादेवमुन्मीलनमोक्षेष्टयोरपि पश्चिमायां ज्ञेयम् । रविग्रहणे तु स्पर्शनिमीलनप्रग्रहेष्टानां वलनज्या पश्चिमायां व्यासार्द्धवृत्ते विपरीतदिक्का देया । माध्यग्रहणकी च विक्षेपवशा-दुत्तरतो दक्षिणतो वा याम्योत्तररेखाया दक्षिणा सव्येनोत्तराऽप-सव्येन मोक्षादुन्मीलनमोक्षेष्टानां च पूर्वस्यां यथा दिक्केति । स्पर्श-मोक्षीयौ च विक्षेपौ मानैक्यार्द्धवृत्ते खण्डनज्याग्राद्यथादिक्कौ देयौ । मध्यग्रहणिकश्चन्द्रवत् स्ववलनमार्गेण निमीलनेष्टेषु च भुजाग्रा-त्कोटिर्यथा दिक्का । शेषं चन्द्रवदिति परिलेखे वैतदेव तात्पर्यम् । यद्रविचन्द्रयोर्द्वयोरपि ग्रहणे यत्पूर्वस्यां वलनं तद्यथा दिक्कम् । यच्च पश्चिमायां तद्विपरीतदिक्कम् । एवं सति यद्दक्षिणं वलनं तत् सर्वमपि प्रदक्षिणम् । यच्चोत्तरं तदप्रदक्षिणं देयमित्यर्थः साधितो भवति । एतदेवोत्तरश्लोकैरुक्तम्,—

ग्राह्यवृत्तं समभुवि मानैक्यार्द्धं च तद्वहिः ।
त्रिज्यावृत्तं च तद्बाह्ये साधिताशं समालिखेत् ॥१॥
दक्षिणं वलनं दद्यात्सर्वदिक्षु प्रदक्षिणम् ।
उत्तरं चापसव्येन स्यादेषा वलनक्रिया ॥२॥
मध्यादेर्वलनं प्राच्यां मीलनप्रग्रहेष्टयोः ।
उन्मीलने च मोक्षेष्टे पश्चाच्चन्द्रेऽन्यथा रवौ ॥३॥
भुजाग्राच्च यथाप्रोक्तो विक्षेपो मध्यतःश्रुतिः । *
तद्युते ग्राहकार्द्धेन ग्राह्यं परिलिखेत्ततः ॥४॥

---

* अत्र चत्वारः श्लोकास्त्रुटिताः सन्तीत्यादर्शपुस्तके श्लोकाङ्कदर्शनादवगम्यते प्रतीयते च सन्दर्भासङ्गतेः ।

प्रदद्यान्मध्यविक्षेपं मध्यसूत्रे च मध्यतः ।
तदग्राद् ग्राहकार्द्धेन मध्यग्रासं प्रसाधयेत् ॥५॥

तथा च शिष्यधीवृद्धिदतन्त्रे,—

पूर्वाशायां प्रग्रहः शीतरश्मेः
पश्चान्मोक्षस्तिग्मगोरन्यथा तौ ।
क्षेपा ज्ञाता व्यत्ययेन स्युरिन्दो-
र्यद्वद्भानोरागतास्तद्वदेव ॥१॥
ग्राह्यं वृत्तं मानयोगार्द्धवृत्तं
त्रिज्यावृत्तं चालिखेत्साधिताशम् ।
त्रिज्यावृत्ते शीतगोः पूर्वभागा-
ऽज्यावद्द्याद्वालनान्यङ्गुलानि ॥२॥
पश्चाद्भागात्तिग्मगोश्चन्द्रभान्वोः
पश्चाद्ग्रस्तादन्यजान्यादिजानि ।
याम्यात्सौम्यान्मध्यमानि प्रदेशा-
दन्यैकाशान्यानयेत्प्राक्प्रतीच्योः ॥३॥
क्षेपा ज्ञातास्तिग्मगोरन्यथेन्दो-
स्तेभ्यः सूत्राण्यङ्कयेत्केन्द्रभाञ्जि ।
आद्यादन्यात् सूत्रमानैक्ययोगात्
ज्यावत् क्षेपौ सारयेदाद्यमोक्षौ ॥४॥
मध्यं क्षेपं मध्यतो मध्यसूत्रे
क्षेपाग्रेभ्यो ग्राहकार्द्धेन तेभ्यः ।
विज्ञायन्ते खण्डिते ऽनुक्रमेण
ग्राह्ये स्पर्शौ मध्यमग्रासमोक्षौ ॥५॥

क्षेपाग्रत्रयमण्डलैस्तिमियुगस्यास्यस्फिगासक्तयो
रज्जोर्योगभुवः शरत्रयशिरः प्राप्यालिखेन्मण्डलम् ।

तस्माद् ग्राहकवर्त्मं केन्द्रनिसृतां युक्त्या श्रुतिं तत्स्पृशं
कृत्वा ग्राह्यकमालिखेदभिमतग्रासादिसंसिद्धये ॥६॥

मुच्यमान उडुपे पराङ्मुखीं
छाद्यमान इह शक्रदिङ्मुखीम्।
संप्रसार्य विधिवत् श्रुतिं ततो
विद्धभीष्टदितमन्यथा रवौ ॥७॥

अत्र वासना। स्वविमण्डलस्थश्चन्द्रः स्वगत्या प्राक् गच्छन् अपमण्डलस्थां रविगत्या प्राग्गच्छन्तीं भूच्छायां पश्चाद्भागाच्छीघ्रगत्या समेत्य विक्षेपस्य मानैक्यार्द्धादल्पत्वे सति स्वबिम्बपूर्वभागेन प्रविशति। प्रविश्य च बिम्बपूर्वभागेनैव तस्या निर्गच्छन् बिम्बपश्चिमभागेन तां त्यजति। अतश्चन्द्रबिम्बस्य पूर्वस्यां स्पर्शः। पश्चिमायां मोक्षोऽतस्तद्दिशोरेव वलनज्यादानमुचितम्। तद्वशादपमण्डलपूर्वस्या वलितत्वात्। यावता च पूर्वापरसूत्रादुत्तरस्यां दक्षिणस्यां वा स्ववलनज्यावशादपमण्डलपूर्वदिशां वलनं भवति। यथा चाप-मण्डलपूर्वा वलिता तावता स्वस्ववलनप्रमाणेन सर्वासामप्यमण्डल-पूर्वापरसूत्रादुत्तरस्यां वलति तथा तथा तत्पश्चिमाऽपि पूर्वापरसूत्रा-द्दक्षिणेन वलति दक्षिणस्यां चेदपमण्डलपूर्वा वलिता तदा तत्पश्चिमोत्तरेण वलति। अतः प्राच्यां यथावद्वलनं पश्चिमायां चान्यथैवोपपद्यते। यच्च तयोः प्रमाणभेदः स कालभेदादपमण्डल-स्यान्यथाऽवस्थितेः। मध्यग्रहणिकमपि वलनं स्वशरसिद्धायां दिशि प्रग्रहणिकवलनानुसारेण याम्योत्तररेखाया तद् दक्षिणं प्रदक्षिणं वा त्रिज्यावृत्ते देयम्। यतस्तेनापमण्डलदक्षिणोत्तरा सिद्धा भवति। त्रिज्यावृत्तनिष्पन्नत्वाच्च वलनज्यानां तत्रैव विनियोग उपपन्न इति। अर्कग्रहणे त्वपमण्डलस्थमर्कबिम्बं स्वगत्या प्राक् गच्छन् विमण्डलस्थ-श्चन्द्रः शीघ्रगत्या पश्चाद्भागात्समेत्य मानैक्यार्द्धाद्विक्षेपाल्पत्वे सत्या-च्छादयति। छादयित्वा च शीघ्रत्वात् पूर्वतो निर्यात्यतोऽर्कबिम्बस्य

पश्चिमायां स्पर्शो मोक्षश्च पूर्वस्यामतो रवेः स्पार्शिकं पलनं पश्चिमायां मौक्षिकं च पूर्वस्यामिति। स्पर्शमोक्षविक्षेपौ च मानैक्यार्धवृत्त एव देयौ। यतो मध्यबिन्दुतो ग्राह्यबिम्बं तत्परिधिनैव सर्वतो वेष्टितमस्ति। ततश्च ग्राहकार्धं ग्राह्यवृत्त प्राप्यवशं कस्यामपि दिशि भविष्यति। विक्षेपाग्रेषु तत्र काले ग्राहकबिम्बमध्यं भवति। ततश्च ग्राहकमानार्धेन ग्राह्यबिम्बे खण्डिते तात्कालिकग्राससंस्थानं भवति। अतश्च प्रग्रहमोक्षयोः परिधिस्पर्श एव भवति। मध्यग्रहणिकश्च विक्षेपो ग्राह्यबिम्बमध्यात्स्ववलनमार्गेण देयः। यतोऽपमण्डलविमण्डलयोरन्तरं विक्षेपस्ततोऽपमण्डलदक्षिणोत्तरायां मध्यग्रहणविक्षेपः स च तात्कालिकवलनज्यायां ग्राह्यबिम्बमध्यगामि सूत्रं तद्भवति। प्रग्रहेष्टग्रासे च रवेर्मध्यग्रहणादर्वाक् अवश्यं चन्द्रमसा पश्चिमतो भवितव्यम्। अतः प्रग्रहेष्टवलनज्या पश्चिमायां दीयते। तस्यामेव दिश्यपमण्डलस्यान्वेषणाद्वलनाग्राच्च या रेखा ग्राह्यमध्यबिन्दुप्रापिणी अपमण्डलस्य पश्चिममर्धं तत्र रविबिम्बं तन्मध्यादपरेण भुजो दीयते। येनापरतश्चन्द्रबिम्बं सिद्धं भवति। अविक्षिप्ते चन्द्रमसि विक्षेपवशात्तु भिद्यते। अतः कोटिरूपो दीयते। स च यस्यामेव दिशि विमण्डलस्थश्चन्द्रस्तस्यामेव प्रसार्यते। अतो यथादिशमेव रविग्रहणे। यतस्तावदेवान्तरमपमण्डलविमण्डलयोरतः कोट्यग्रे चन्द्रबिम्बमध्यम्। मध्यबिन्दुतश्च रविबिम्बमध्यम्। तयोश्च केन्द्रयोस्तिर्यगन्तरं कर्ण एव। तथा स्थितयोर्बिम्बयोर्यावान् परस्परमनुप्रवेशस्तावानिष्टकाले ग्रासस्तेन कर्णकोटिसम्पातात् ग्राहकार्धेन बिम्बखण्डना क्रियते। अथ मोक्षस्थित्यर्धे प्रश्नः। तदा पूर्वस्यां दिश्यवश्यमेव ज्ञेयम्। निमीलनोन्मीलनयोरपीयमेव वासना। यतस्तयोरिष्टग्रासान्न कश्चिद्विशेष इति। चन्द्रग्रहणे तु मध्यबिन्दुरेव विमण्डलस्थं चन्द्रबिम्बम्। अतः प्रग्रहेष्टवन्निमीलनेऽपि स्ववलनसिद्धायां प्राच्यामेव बाहोर्निःसारणम्। ग्राहकस्याग्रतः स्थितत्वात्। कोटिप्रसारणमपि विप-

रीतदिक्कम्। यतोऽपमण्डलस्थं भूच्छायाबिम्बमन्वेष्यम्। तथैव कृते यथादिशं भवति। मोक्षेष्टग्रासवदुन्मीलनेऽपि भूच्छायामध्यस्यापरेण स्थितत्वादपरस्यामेव भुजादि दातुं युज्यत इति सर्वमुपपन्नम्। एवं वृत्तत्रयेण परिलेखः। यथा वृत्तद्वयपदार्थाननुपातेन ग्राह्यवृत्ते परिणाम्याप्येकेनैव ग्राह्यवृत्तेन परिलेखस्तथ्यथा। यदि मानैक्यार्धवृत्त एतावती विक्षेपतुल्या ज्या तत्त्रिज्यावृत्ते कियतीति लब्धं त्रिज्यावृत्ते विक्षेपज्या। तच्चापांशानां स्वस्ववलनांशानां च तुल्यान्यदिशां यथा दिग्योगवियोगज्यां ग्राह्यमानार्धहतां त्रिज्यया भजेल्लब्धं स्फुटा वलनज्या ग्राह्यवृत्ते भवति। तदग्रे प्रग्रहमोक्षौ। एवं मध्यग्रासोऽपि ग्राह्यवृत्तपरिणतस्ववलनज्याग्रे प्रसुतविक्षेपाग्रात् इष्टे च त्रिज्याहतविक्षेपं स्वकर्णेन भजेत् त्रिज्यापरिणतो भवति। तत्र प्राग्वत् स्ववलनयोगवियोगेन स्फुटां वलनज्यां कुर्यात्। निमीलनोन्मीलनयोरप्येवं ग्राह्यवृत्तपरिणतवलनज्याग्रे मध्यात् इष्टकर्णं प्रसार्य तदग्रात् परिलेखः कार्य इति।

अथ पर्वाधिपानयनार्थं* ग्रहणयोश्च सम्भवासम्भवप्रदर्शनार्थं भट्टोत्पलकृतमार्याद्वयम्—

दिनवृन्दात्खशर५०घ्नात्खगुणनवरवि१२९६भिर्विभाजितादाप्तम्।
रामर्तुखेन्दु१०६३सहितं क्षिपेद् द्युवृन्दे भजेत्खघृति१८०भिस्तत्॥
लब्धः कमलजपूर्वः पर्वगणः सप्तभाजिते शेषः।
गतगम्ये तिथ्यू१५ने खगुणो३०ने चन्द्रसूर्यपर्व स्यात्॥

अयमर्थः। चन्द्रग्रहणान्वेषणे पूर्णिमायामहर्गणः कार्योऽर्कग्रहणान्वेषणे चामावास्यायाम्। ततस्तं स्थानद्वये संस्थाप्य खशरैः पञ्चाशता सङ्गुण्य षण्णवरविभिश्चतुरूनत्रयोदशशतैर्भजेत्।

---

* कल्पादितः षण्मासोत्तरवृद्ध्या ब्रह्मादयः सप्त पर्वेशाः फलादेशार्थं वराहाद्युक्ता भवन्ति। गत एकस्मिन् चान्द्रमासे पातोनरवेः क्षेपः १।०।४०।१५ अतः स्वल्पान्तरात् पातोनरविभगणा द्विभक्तास्तदंशा वाऽशीत्यधिकशत १८० भक्ताः पर्वेशा भवेयुः।

ततो यल्लब्धं तत् रामर्त्तुखेन्दुसहितं त्रिषष्ट्यधिकदशशतैर्युतं सदहर्गणे क्षिपेदेवं कृते यो राशिस्तं खधृतिभिरशीत्यधिकशतेन भजेत् ततो यल्लब्धं स गतः पर्वसमूहः। तस्मिन् सप्तभाजिते सति शेषाङ्क-समो गतः कमलजपूर्वो ब्रह्माद्यो रविशशिग्रहणयोरधिपो भवेत्। तथा वराहमिहिरः—

षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः।
ब्रह्मशशीन्दुकुबेरा वरुणाग्नियमाश्च विज्ञेयाः॥

अत्र चाशीत्यधिकशतेन भागे हृते यच्छेषं वर्तमानपर्वाधिपस्य तद्गतमुच्यते। तदेवाशीत्यधिकशताच्छुद्धं शेषं गम्यमुच्यते। तत्र गतं गम्यं वा पञ्चदशस्य ऊनं भवति तदा चन्द्रपर्वणः संभवो वाच्यः। एवं स्वकीयादहर्गणाद् गतगम्ये ते खगुणेभ्यस्त्रिंशत ऊने सूर्यपर्व-सम्भवः। उभयत्राऽप्यधिके यथास्वं पर्वाभावो यथा यथा गतस्य गम्यस्य वा निर्दिष्टसंख्याया ऊनता तथा तथा ग्रासाधिक्यमिति।

अत्र वासना। अमावास्यान्ते पौर्णमास्यन्ते वा चन्द्रक्षेप-स्याल्पत्वे पर्वणस्तावत्सम्भवस्तत्रामावास्यान्ते य एव रविः स एव चन्द्रः। पौर्णमास्यन्ते च तयोः षड्भाश्यन्तरितत्वम्। यतस्तयोः परमा-सन्नत्वविप्रकर्षाभ्यां अमावास्यान्तपौर्णमास्यन्तौ भवतः। अत एकेनैव सायनांशरविणा चन्द्रस्यापि ग्रहणसंभवोऽन्वेष्यः। विक्षेपस्य तु पातमूलत्वात् रविपातयोगे चक्रतुल्ये चाशीत्यधिकशतसङ्ख्य-रविपातयोगांशैस्तान्द्रैः षड्भिः षड्भिर्मासैर्विक्षेपाभावे पर्व सम्भवति। तत्र चतुर्युगे रविभगणाः ४३२०००० पातभगणाः २३२२२६ तयोर्योगे जातम् ४५५२२२६ एतत्षष्ट्यधिकशतत्रयगुणितं जाताः पातार्कभगणांशयोगांशाः १६३८८०१३६० एतेषां चतुर्युग-सावनानां १५७७९१७५०० चान्तरे जाता अधिकाः पातार्क-भगणांशयोगांशाः ६०८८३८६० एषां सावनानां चासन्नाप-वर्तकेन मुनिनगरसात्यष्टिरवि १२१७६७७ संख्येनापवर्तने जाता

अंशाः ५० सावनाश्च १२८६ ततस्त्रैराशिकम् । यदि षण्णवरवितुल्यसावनैः पञ्चाशदंशा अधिका भवन्ति तदाऽहर्गणतुल्यसावनैः कियन्त इति । लब्धा अधिकांशा अहर्गणे योज्यन्ते । यथा तावन्तः करणादितो गताः पातार्कयोगांशा भवन्ति ।

अथ क्षेपोत्पत्तिस्तत्र करणादौ कलिगताहर्गणः १३७५५६५ अस्मात्पञ्चाशद्धतात् षण्णवरविभक्ताल्लब्धम् ५३०६८ एतदहर्गणे संयोज्य ततः खधृतिभिर्लब्धं ७८३६ अस्मात्सप्तभक्तावशेषम् ५ अतः करणादावग्निः पर्वेशो भवति । खधृतिभक्तावशेषम् १५४ गुणकस्य पञ्चाशतः किञ्चिदधिकत्वात् शेषेऽधिको नवकः क्षिप्तो जातम् १६३ पञ्चके सप्तभक्तावशेषे खधृतिपरिणते जातम् ९०० उभयक्षेपे जातं १०६३ चन्द्रग्रहणे गतस्य गम्यस्य वा तिथिभ्य ऊनतायां रविग्रहणे च खगुणेभ्य ऊनतायां मानैक्यार्द्धादिक्षेपस्य न्यूनतासम्भवः । इत्युपपन्नम् । एतच्च पर्वपानयनं सान्तरमिव प्रतिभाति । यतः कल्पगतात् पर्वपानयने करणादावन्यथात्वं दृश्यते । तद्यथा । करणादौ कल्प-गता हर्गणः खाष्टाश्विधृतिवसुशराग्निरसक्षत्यद्रयः ७२०६३५८१८२८० कल्प-सावनाधिक-पातार्क-भगणयोगैरपवर्त्तितैरमीभिश्चन्द्रशरेषुखाभ्रवेदाङ्कैः ९४००५५१ गुणितो जातः ६७७४३७३६१६७८७२२८० अपवर्त्तित-सावनैश्च तत्वाङ्गपञ्चाभ्रशराग्निसिद्धैः २४३५०५६२५ भक्तो लब्धम् २७८२०१९४१४१ एतदहर्गणे योजितं जातम् ७४८४५६०१२४२१ अस्मादशीत्यधिकशतलब्धम् ४१५८०८८९५७ शेषम् १६१ लब्धात् सप्तभक्तावशेषम् १ अतः करणादौ शशी पर्वेशो भवति । तदत्र तद्विदः प्रमाणमिति । पर्वपानयने त्वयं पाठ उपपन्नः ।

अहर्गणाच्चन्द्रशरेषुखाभ्रवेदाङ्कसङ्ख्यानिहताद्विभक्तात् ।
तत्वाङ्गपञ्चाभ्रशराग्निसिद्धैर्लब्धं कुवेदाग्नियुतं द्युवृन्दे ॥
क्षिप्तं खधृत्या विभजेदवाप्तात् पर्वाधिपः सप्तहृतावशेषे ।
ब्रह्मादिको गम्यगते तिथिभ्य ऊने विधोः पर्व रवेः खरामात् ॥२॥

अथ यावत्प्रमाणं सूर्यग्रहणमादेष्टव्यं यावच्च चन्द्रग्रहणमादेष्टव्यं यावच्च नादेष्टव्यमित्युत्तरे आर्यामाह,—

द्वादशभागादूनं ग्रहणं तेजस्त्वाद्रवेरनादेश्यम्।
षोडशभागादिन्दोः स्वच्छत्वादधिकमादेश्यम्॥

रवेर्ग्रहणं द्वादशभागादूनं नादेष्टव्यम्। तेजस्तैक्ष्ण्याद् दुर्निरीक्ष्यत्वेन रविबिम्बस्य द्वादशांशो ग्रस्तोऽपि न दृग्विषयमेत्यतोऽधिकमादेष्टव्यम्। चन्द्रबिम्बस्य षोडशांशो ग्रस्तोऽपि नैर्मल्यान्नोपलक्ष्यते। अतस्तदधिकमेवादेष्टव्यमिति।

अथ ग्रस्तस्य बिम्बस्य वर्णनिर्देशमुत्तरे आर्ययाह,—

आद्यन्तयोः स धूम्रः कृष्णः खण्डग्रहेऽर्द्धतोऽभ्यधिके।
ग्रासः सकृष्णताम्रः सर्वग्रहणे शशी कपिलः॥

आदिश्चान्तश्च तयोः स्पर्शमोक्षासन्नकालयोर्यो ग्रासः स धूम्रवर्णो भवेत्। खण्डग्रहे चार्द्धादूनेऽर्द्धे च कृष्णवर्णः प्रविभासते। बिम्बस्यार्द्धतोऽभ्यधिके त्र्यंशोने पादोने वा ग्रासे स कृष्णताम्रो वर्णः सर्वग्रासे च शशी कपिलवर्णोऽवभासते। रविश्च ग्रस्तः सन् सर्वेष्वपि भागेषु कृष्ण एवोपलभ्यते। तच्च प्रत्यक्षमेवेति।

अथ पर्वानयनमुत्तरे आर्यापञ्चकेनाह,—

पातोनरवेर्भार्द्धाच्चक्राच्चोनाधिकाः कला भक्ताः।
तद्गतियुत्याऽऽसन्नदिनैरासन्नेऽर्कस्य मासान्ते॥१॥
पर्वेन्दोः पक्षान्ते प्रागधिकोना युतिर्भवति पश्चात्।
तन्मध्ये न ग्रहणं यदि भानोः पञ्चजिनभरसाः ५।२४।२७।६॥२॥
इन्दोर्विषया द्वियमा दिवाकराः कृतशरा ५।२२।१२।५४स्तदुच्चस्य।
व्योमातिधृतिद्वियुगानि रसशरा ०।१८।४२।५६श्चन्द्रपातस्य॥३॥
खं नन्दा द्वियमाः खाब्धयो ०।९।२२।४० ग्रहाद्या यथेष्टपर्वगुणाः।
क्षेप्याः पर्वण्येष्ये शोध्याः पातेऽन्यथाऽतीते॥४॥

ग्रहणे यथा रवीन्द्वोः स्पष्टीकरणाद्यमुक्तवत्कृत्वा ।
एवं पर्वज्ञानं ग्रहणज्ञानं स्फुटं गणितात् ॥५॥ *

इष्टदिने उक्तविधिना रविचन्द्रचन्द्रोच्चपातान् मध्यमान् कृत्वा ततो मध्यमरविः पातोनः कार्यः । तस्य भादि यदि चक्रार्द्धन्यूनं भवति तदा स चक्रार्द्धाच्छोध्योऽप्यथ चक्रार्द्धाधिकं भवेत् तदा तस्माच्चक्रार्द्धं शोध्यम् । एवं चक्रेऽपि कार्यम् । तस्य शेषस्य लिप्ता मध्यमरविपातभुक्तियोगेन भक्ताः कार्याः । ततो यदासदिनादि तैः पातार्कयोगे चक्रार्द्धं चक्रं वा भवति । ततो यदि चक्रार्द्धचक्रोपलक्षितयुतेः सकाशादिष्टदिनयुतिरधिका तदा प्रगताऽथोना तदा पश्चादासदिनैश्चक्रार्द्धचक्रतुल्या युतिः । सा च यद्यासन्न मासान्ते भवति तदाऽर्कग्रहणस्य संभवो ज्ञेयः । अथ पक्षान्ते तदा इन्दोः पर्वसत्ता । आसन्नतायास्तु प्रमाणं नोक्तं तत्तु चतुर्वेदाचार्यैः प्रदर्श्यते । तद्यथा । यद्यर्कग्रहणमन्विष्यते तदाऽऽसन्नेऽमावास्यान्ते मध्यग्रहाः कार्याः । अथ चन्द्रग्रहणं तत्पौर्णमास्यन्ते । ततः पातोनार्कं कृत्वा तद्भार्द्धचक्रान्तरलिप्ताभ्यः पातार्कभुक्तियोगेन यानि प्राग्वत्प्राप्तानि दिनानि तानि यद्येकोनविंशतिघटिकानि भवन्ति तदाऽर्कग्रासाभावः संभाव्यो मासान्ते । पक्षान्ते तु चन्द्रग्रासाभावो यद्यासदिनानि पञ्चदशघटिकानि भवन्ति । एतेभ्यः प्रदर्शितदिनेभ्यः प्राप्तदिनैरधिकैः सुतरां ग्रासाभावो वाच्यः । स्वदेशे रव्यादिदिवसेन तत्प्रत्यासन्ने मासान्ते पक्षान्ते वा तैर्मध्यमैः स्पष्टीकृतैर्विक्षेपस्य मानैक्यार्द्धादाधिक्ये सति यदि ग्रहणं सम्भवति तदा पुनरेव चान्द्रैः षड्भिर्मा-

---

* अत्र पातोनरविर्भागैः भार्द्धेन चक्रेण वा समाने शराभावादवश्यमेव ग्रहणं यदि पातोनरविर्मासान्ते पक्षान्ते वा भवेत् । अथ तस्मात् षड्भिर्मासैः पूर्वं परतोऽपि तादृश्येव स्थितिरिति रविचन्द्रचन्द्रोच्चपातानां पञ्चजिनभरसा ५।२४।२७।६ इत्यादिषाण्मासिकचालनं योजितं शोधितं च । अथ च षण्मासोत्तरं प्रायः पर्वेशा भवन्तीति षाण्मासिकचालनराश्यादयो यथेष्टपर्वगुणाः कृता इति ।

सेरन्विष्यति। अग्रतः पृष्ठतो वा तदर्थमिमाः षाण्मासिक्यो भुक्तयो राश्यादिका आचार्यपठिता भानोः पञ्चजिनेत्यादिका एष्यति पर्वण्य-न्विष्यमाणे चेप्याः पाते च शोध्याः। अतिक्रान्ते त्वन्यथा। रविचन्द्र-चन्द्रोच्चेभ्यः शोध्याः पाते तु चेप्याः। एवमुक्तेन प्रमाणेन पर्वज्ञानमेव केवलम्। ग्रहणज्ञानं तूक्तादेव गणितात् स्फुटं भवतीति।

अत्र वासना। आनुलोम्यवैलोम्याभ्यां मेषादेरर्कपातयोर्यो भोगयोगः स पातार्कयुतिरुच्यते। अत्र च पातस्य चक्रच्युतत्वेन पातोनेत्युक्तम्। परमार्थतस्तु सैव युतिर्भवति। अर्काध्यासित-प्रदेशादग्रतः पृष्ठतो वा यो निकटे विमण्डलापमण्डलसम्पातो मुख-पुच्छयोरन्यतरस्तेन सहान्तरं रविपातयोस्तल्लिप्तीकृतम्। अस्मात् त्रैराशिकेन कालाप्तिः। यदि भुक्तियोगेन दिनमेकं तदन्तरलिप्ताभिः किमिति। फलं दिनादि। तावता कालेन विमण्डलापमण्डल-सम्पातो भूतो भविष्यति चेति सम्पातप्राप्तिदिनामावास्यान्तोऽतोऽग्रतः पृष्ठतो वा यदि स्वल्पदिनैर्भवति तद्रविणाऽल्पं गतं गम्यं वा ताव-द्भवति। चन्द्रोऽपि तत्रैवावश्यं अमावास्यान्ते भविष्यत्यतः सम्पात-सन्निधौ चन्द्रविक्षेपः स्वल्पो युज्यते तस्माद् ग्रहणाशङ्का पौर्णमास्यां तथैवं योज्यम्। अर्द्धचक्रेणान्तरितत्वात् रवेस्तत्र च विक्षेपस्याल्पत्वात् ग्रास आशङ्क्यते। अथासन्नदिनान्युत्पाद्यन्ते। तत्र रविग्रहे तावत् ग्रासस्य परमाभावे चन्द्रविक्षेपो रविचन्द्रमानैक्यार्द्धस्यास्य ३४।१६ तुल्यो भवति। परमावनतिश्च ४८।४४ अनयोर्योगः ८३।० यद्येता-वाँश्चन्द्रविक्षेपस्तदा रवेर्ग्रासाभावः। अनेन चन्द्रविक्षेपेण विपरीत-कर्मणा चन्द्रविक्षेपं पञ्चभिर्गुणयित्वा नवभिर्भजेल्लब्धं ज्या ४६।७ अस्याश्चापम् १७।५२ मध्यमेन रविणा कर्मेदमतो रवेः परमफलम् १३०।४८ एतद्दृणगतं कल्पयित्वा अत्रैव योजिते जातम् २०।२।५५ एतावत्यां पातार्कयुतौ न सम्भवति। एतल्लिप्तीकृत्य पातार्कभुक्ति-योगेनानेन ६२।१८ सवर्णयित्वा भजेल्लब्धं दिनानि १८।१८। अथ चन्द्रग्रहणे भूच्छायाचन्द्रयोर्मानैक्यार्द्धम् ५६।२२ एतावति

चन्द्रविक्षेपे ग्रासाभावः। अस्मात् प्राग्वज्जीवा कलादि * २११८ अस्याश्चापम् १२।२।५२ अत्र परमं रविफलं संयोज्य जातम् १४।१३।४१ अस्मात्पातार्कभुक्तियोगेन लब्धम् १३।४५ एतानि स्थूलानि। त्रिज्याया लघुत्वात्। महत्या च त्रिज्यया सूक्ष्माणि चतुर्वेदोक्तानि जायन्ते। पातार्कयुतिश्च यदि सम्पातादूना तदाऽऽगामो पर्वसम्भवोऽधिका चेत्तदाऽतोत इति।

इति श्रीपण्डितमहादेवात्मज आमशर्मविरचिते खण्डखाद्यक-वासनाभाष्ये चन्द्रग्रहणाधिकारश्चतुर्थः ॥ ४ ॥

अत्र ग्रन्थ सङ्ख्या ५६० ॥

---

* आदर्शपुस्तकेऽत्र संख्याभावः।

अथ सूर्यग्रहणाधिकारो व्याख्यायते। तत्र रवेश्चन्द्रश्छादकः। स च तिथ्यन्तेऽपमण्डलभोगेन समो भवति। तद्विक्षेपस्य मानैक्यार्द्धादल्पत्वे पर्वसम्भवस्तत्र च काले द्रष्टा भूगोलोपरिस्थितो यावत् पश्यति तावद्रविचन्द्रौ द्वावपि स्वस्वकक्षास्थौ पृथक् पृथक् स्वदृक्सूत्रगौ पश्यति। तत्र तयोर्यत् पूर्वापरमन्तरं भूम्युच्छ्रायवशेन तल्लम्बनमुच्यते। यच्च याम्योत्तरमन्तरं साऽवनतिः। तत्रादावेव लम्बनानयनं तिथौ तत्संस्कारञ्चार्यार्द्वयेनाह।

वित्रिभलग्नापक्रमविक्षेपाक्षांशयुतिविशेषोनात्।
भवितयाऽज्या छेदस्त्रिज्यार्द्धकृतेः फलेनहृता ॥१॥
वित्रिभलग्नार्कान्तर-जीवा घटिकादि लम्बनं सूर्ये।
ऋणमधिके धनमूने वित्रिभलग्नात्तिथावसकृत् ॥२॥

विगतं त्रिभं यस्मात्तद्वित्रिभं तच्च तल्लग्नं च तस्य योऽपक्रमः तस्यैव च यो विक्षेपस्तथा ये स्वदेशाक्षांशास्तेषां त्रयाणां दिगैक्ये या युतिर्दिग्भेदे च यो विशेषस्तेनोनात् भवितयात् या ज्या सा त्रिज्यार्द्धकृतेश्छेदो भवति। तेन छेदेन त्रिज्यार्द्धकृतौ भक्तायां यत् फलं तेन वित्रिभलग्नार्कान्तरजीवा हृता कार्या। ततो यत्फलं घटिकादि तल्लम्बनं भवति। लम्बतेऽवस्रंसते चन्द्रो रविदृक् सूत्रादनेन कालेनेति लम्बनम्। रविबिम्बदृक्सूत्रचन्द्र बिम्बदृक्सूत्रयोरन्तरं पूर्वापरं कालात्मकमित्यर्थः। एतदुक्तं भवति। अमावास्यायामुक्तविधिना पर्वसम्भवे सति रविचन्द्रचन्द्रोच्चचन्द्रपातानर्द्धरात्रिकानानीय रविचन्द्रौ स्फुटीकृत्य च ताभ्याममावास्यान्तमुपलभ्य च तदासन्नान्मध्यमानौदयिकान्माध्याह्निकानस्तकालिकान् वा यथासम्भवं विधाय रविचन्द्रौ स्फुटीकृत्य च ताभ्यां तिथ्यन्तमानीय चन्द्रग्रहणवन्नतविकलासंस्कारेण स्फुटे तिथ्यन्ते तौ समलिप्तौ कार्यौ। ततः समलिप्तिकार्कात् स्फुटतिथ्यन्तकालेन त्रिप्रश्नोक्त्या लग्नमानीय

तस्माद्राशित्रयमपास्यमयनांशाश्च तद्वित्रिभलग्नं भवति । तस्मात् सायनात् त्रिप्रश्नोक्त्या क्रान्तिः कार्या । तस्माच्चायनांशहीनाच्चन्द्र-विक्षेपः कार्यः । स चात्र पाठलाघवार्थेवाचार्येणोक्तोऽवनतिकर्मण्ये-वास्योपयोगाल्लम्बनानयने तु क्रान्त्यैव केवलया कर्म । रविवित्रिभा-देव लम्बनस्योत्पाद्यमानत्वात्तस्यापमण्डल एवावस्थितेरिति । तत-स्तत्क्रान्तिकलायां षष्ट्या भागमपहृत्यांशाः कार्याः । तेषां स्वदेशा-क्षांशानां च दिगैक्ये योगो दिग्भेदे वियोगः कार्यः । एवं कृते यद्भवति तद्राशित्रयादपास्यावशेषस्य या ज्या तया त्रिज्यार्द्धवर्गो ५६२५ भाज्यो यत् फलं कलादि तेन वित्रिभलग्नस्य तात्कालिकार्कस्य चान्तरस्य या जीवा तां भजेल्लब्धं घटिकादि लम्बनं भवति । तच्च वित्रिभलग्नादधिके समलिप्तसूर्ये उदयाद्गम्येऽमावास्यान्ते ऋणं कार्य-मूने च सूर्ये धनमिति । अत्र यदा समलिप्तकाललग्नाद्राशित्रयं न शुद्ध्यति तदा तत्र राशिद्वादशकमधिकं कृत्वा शोधयेत्तद्वित्रिभम् । तच्च यद्यपि मेषादिगणनायामर्कादधिकं भवति तथाऽप्यूनमेव कल्प-नीयम् । धनर्णसंस्कारे तस्मादर्कस्य पूर्वेण नतत्वात् । एतच्च कर्मासकृत्तद्यथा । लम्बनघटिकाभिर्ग्रहभुक्तीः सङ्गुण्य षष्ट्या भजेल्लब्धं लिप्तादि फलमृणे लम्बने समलिप्तग्रहयो ऋणम् । धने लम्बने धनं पाते च विपरीतं कृत्वा ततो लम्बनसंस्कृततिथ्यन्ते लग्नमानीय वित्रिभलग्नापक्रमेत्यादिकर्मणा भूयोऽपि लम्बनमानयेत् । पुनरप्येवं तावद्यावल्लम्बनं स्थिरीभवति । एवममावास्यान्तो लम्बनसंस्कृतः स्फुटतिथ्यन्तो भवति । ग्रहाश्च लम्बनसंस्कृता मध्यग्रहकालिका भवन्तीति ।

अत्र * वासना । क्षितिजापमण्डलयुतिर्हि लग्नमुच्यते । तस्माच्च यदा राशित्रयमपनीयते तदा वित्रिभं भवति । तच्चापमण्डलहक्-

* लम्बनोपपत्तौ तावत् स्थूलोक्त्या क्षितिजस्थे रवौ परमलम्बनं चतस्रो ४ घटिका भवन्ति । मध्याह्नकाले च लम्बनाभावः । तदिह क्रान्तिमण्डलाकारे दृग्मण्डले "त्रिज्यातुल्यया रवि-

क्षेपमण्डलसम्पाते भवति। ततो यदि वित्रिभलग्नं सममण्डलमध्ये भवति तदाऽभीष्टदेशस्थद्रष्टुर्मस्तके भवति। तत्रार्कोदयकाले रविचन्द्रौ द्वावपि क्षितिजासक्तौ भवतो द्रष्टा च भूगोलोपरिस्थितो यावत्पश्यति तावत्पृथक् तौ दृक्सूत्रगौ पश्यति। तत्र च रविबिम्ब-दृक्सूत्राच्चन्द्रबिम्बदृक्सूत्रमधोलम्बितं पश्यति। महत्वाद्रविकक्षायास्तद्योजनकर्णो हि महानतो लम्बनस्य सम्भवः। यदि पुनर्भूमध्ये द्रष्टा भविष्यति तदा समदृक्सूत्रस्थसमलिप्तिकं चन्द्रमसाच्छन्नं रविं स द्रक्ष्यति। समलिप्तिककाले च करणागत एव तिथ्यन्तो मध्यग्रहणिकः स्फुटतिथ्यन्तो भविष्यति। लम्बनाभावात्। एवमवनतावपि दृक्क्षेपमण्डलगत्या योज्यम्। तथा च ब्रह्मसिद्धान्ते—

दृश्यादृश्यं दृग्गोलार्द्धं भूव्यासदलविहीनयुतम्।
द्रष्टुर्भूगोलोपरि यतस्ततो लम्बनावनती ॥१॥
वित्रिभलग्नसमेऽर्के न लम्बनं तदधिकोनके भवति।
तत्स्वक्रान्तिज्योदक् यदाऽर्कजीवासमा न तदा ॥२॥
अवनतिरतोऽन्यथा भवतीति।

तत्र सममण्डलमध्यगे वित्रिभे वित्रिभोन्नतज्या व्यासार्द्धम्। उदयकाले वित्रिभलग्नार्कान्तरज्याऽपि व्यासार्द्धमेव। तस्मादतः परं महल्लम्बनं नास्ति। तद्यथा। रविबिम्बभूगोलमध्यान्तरं

---

वित्रिभान्तरज्यया चतस्रो ४ घटिकास्तदा इष्टया रविवित्रिभान्तरज्यया किमिति" लम्बन-घटिकाः। अथ क्रान्तिमण्डलदृङ्मण्डलयोर्भिन्नत्वे "त्रिज्यातुल्ये वित्रिभलग्नशङ्कौ इमा लम्बन-घटिकास्तदिष्टे वित्रिभलग्नशङ्कौ किमिति वास्तवा लम्बन घटिकाः

$$= \frac{\text{अंज्या} \times ४ \text{ विशं}}{\text{त्रि} \times \text{त्रि}} = \frac{\text{अंज्या} \times \text{विशं}}{\frac{\text{त्रि}^{२}}{४}} = \frac{\text{अंज्या} \times \text{विशं}}{\left(\frac{\text{त्रि}^{२}}{२}\right)}$$

अत्र अंज्या = रविवित्रिभान्तरज्या

विशं = वित्रिभलग्नस्य शङ्कुः। स च वित्रिभलग्नक्रान्तेरक्षांशानां च संस्कारेण ये वित्रिभलग्नस्य नतांशास्तदूननवत्यंशानां ज्यैव भवति ॥

रवियोजनकर्णप्रमाणं खागाष्टवेदाष्टरससंख्यं भुजा ६८४८७०। भूव्यासार्द्धं कोटिः सार्द्धखनन्दमुनिसंख्या ७९०।३० अनयोर्वर्गयुतिमूलं तिर्यक्कर्णो द्रष्टृ रविबिम्बस्य चान्तरं दृक्सूत्ररूपं तस्मिन् काले भवत्येवं स्थिते चन्द्रयोजनकर्णेन नन्दकरार्कशरसंख्येन ५१२२९ पूर्वप्रदर्शितरवियोजनकर्णेन चन्द्रकक्षाप्रदेशे कोटिस्त्रैराशिकेन साध्यते। तद्यथा। यदि रवियोजनकर्णतुल्यया भुजया भूव्यासार्धतुल्या कोटिस्तदा चन्द्रकर्णो नरविकर्णतुल्यया शशियुगाङ्गरामगुणरससंख्यया ६३३६४१ कियतीति फलं चन्द्रकक्षाप्रदेशे योजनरूपा कोटिरिन्दुगुणागाः ७३१ एतावन्ति लम्बनयोजनानि। एभिर्लिप्तानयनाय त्रैराशिकम्। यदि चन्द्रकर्णयोजनैः सार्द्धतिथिकृताग्नि ३४१५।३० संख्याभिर्भगणकला व्यासार्द्धलिप्ता भवन्ति तल्लम्बनयोजनै रूपगुणागैः ७३१ कियत्य इति फलं लम्बनलिप्ता अष्टाचत्वारिंशच्चतुश्चत्वारिंशद्विलिप्ताः ४८।४४ एतावत्य एव परमा अवनतिलिप्ताः। एताभिर्घटिकानयनम्। यदि रविचन्द्रभुक्त्यन्तरेण षष्टिर्घटिका भवन्ति तल्लम्बनलिप्ताभिः कियत्य इति फलं चतस्रो लम्बनघटिकाः परमाः। एवं यदि वित्रिभोन्नतज्या व्यासार्द्धतुल्या भवति तदा परमं लम्बनमुदयकालेऽस्तकाले वा। यदा तु वित्रिभलग्नं सममण्डलमध्यात् दृक्क्षेपगत्या दक्षिणोत्तरेण रवेर्नतं भवति तदा न्यूनाश्चतस्रो घटिकाः परमं लम्बनं भवतीति क्रमेण तावद्यावद्वित्रिभलग्नं याम्योत्तरक्षितिजासक्तं भवति। षट्षष्ट्यंशोपलक्षितदेशे भूम्युच्छ्रायापचयक्रमात्तत्रोदयकालेऽपि लम्बनाभावो भवति। दक्षिणायां वित्रिभक्रान्तौ परमायां तत्र वित्रिभोन्नतज्याभावात्। वित्रिभलग्नार्कान्तरज्या च उदयकाले सदैव व्यासार्द्धतुल्या भवति। अन्यत्र दिनगते काले न्यूना भवति। क्रमेण तावद्यावद्वित्रिभसमोऽर्को भवति। तत्र चान्तरज्याभावः। परमोच्चत्वात्तत्रापमण्डलस्य। तेनान्तरज्यावित्रिभोन्नतज्ययोरनियतत्वात् त्रैराशिकद्वयम्। तत्र वित्रिभोन्नतज्यासाधनम्। तावद्विषुवन्मण्डलसममण्डलमध्ययोरन्तरं स्वाक्षांशास्तथा विषुवन्मण्डलाप-

मण्डलयोरन्तरं क्रान्तिः । सा वित्रिभलग्नस्य यदोत्तराभवति तदा वित्रिभं सममण्डलमध्यमभिसरति । ततो यद्यक्षभागेभ्य ऊना वित्रिभक्रान्तिस्तदा सममण्डलमध्याद्दक्षिणेनार्कवित्रिभमथाधिका तदाऽक्षभागान् जित्वोत्तरेण वित्रिभं भवत्यतो भिन्नदिक्कयोः क्रान्त्यक्षभागयोः सर्वदाऽन्तरं युज्यते । अक्षश्च सदैव दक्षिणोऽथ दक्षिणा वित्रिभक्रान्तिस्तदाऽक्षभागैः सह युज्यते । यतः सममण्डलमध्यात्तावति दूरे वित्रिभं भवत्येवं दृक्क्षेपमण्डले रविवित्रिभसममण्डलमध्ययोरन्तरे नतभागानां साधनम् । ततो नतभागैर्नवत्यादपास्तैरुन्नता भागा भवन्तीति दृक्क्षेपमण्डले तेषां या ज्या सा रविवित्रिभोन्नतज्या । ततस्त्रैराशिकम् । यद्युदयकाले त्रिज्यातुल्याया वित्रिभोन्नतज्याया-स्तत्त्वो लम्बनघटिकास्तदेष्टवित्रिभोन्नतज्यायाः कियत्य इति । फलमिष्टदिने परमं लम्बनम् । ततो द्वितीयम् । यदि त्रिज्यातुल्याया वित्रिभार्कान्तरज्याया एतल्लम्बनं तदिष्टकालवित्रिभलग्नार्कान्तरज्यया कियदिति । एवं स्थिते त्रैराशिकद्वयेऽपि त्रिज्याभागहारोऽतस्तयोर्द्वयोर्घातो भाजकः त्रिज्याकृतिश्च सैव । चतुष्कस्य इष्टवित्रिभोन्नतज्यायाश्च घातो गुणकोऽतो गुणकभाजकयोश्चतुष्केनापवर्त्तने गुणके रूपं भाजके त्रिज्यार्द्धकृतिः । पुनर्द्वितीयगुणकेनेष्टवित्रिभोन्नतज्यया गुणकभाजकयोरपवर्त्तने गुणकस्थाने रूपं भाजकस्थाने चेष्टवित्रिभोन्नतज्याभक्ता त्रिज्यार्द्धकृतिरिति । एवं सति यदि वित्रिभलग्नसमो रविस्तदा लम्बनाभावोऽर्कस्यात्युच्छ्राये स्थितत्वादथ वित्रिभादधिकोऽर्कस्तदाऽर्कस्य पूर्वेण नतत्वाल्लम्बनमृणं भवत्यधः पूर्वेणार्कदृक्सूत्राच्चन्द्रस्य स्थितत्वात् । अत एव दत्तराशित्रादशकाङ्कवयविशोधने त्रिवित्रभस्यार्कादाधिक्येऽप्यूनत्वमेवोपपन्नम् । तदानीमर्कस्य पूर्वेणैव नतत्वादथ वित्रिभादूनोऽर्कस्तदा लम्बनं धनं भवति । चन्द्रस्यापरेणार्कदृक्सूत्रादधः स्थितत्वात् । रविदृक्सूत्रगो हि चन्द्रोऽर्कं छादयति मध्यग्रहणकाल इति ।

अथावनत्यानयनं चान्द्रविक्षेपस्फुटीकरणं स्थित्यर्द्धादेशं चार्याद्वयेनाह ।

ये युतिविशेषभागास्तज्ज्याऽवनतिर्गुणा त्रयोदशभिः ।१३।
खाब्धि ४० हृता विक्षेपं कृत्वा तात्कालिकशशाङ्कात् ।३।
संयोगान्तरमवनति-शशाङ्कविक्षेपयोः समान्यदिशोः ।
स्फुटविक्षेपः शशिवत् स्थित्यर्द्धविमर्ददलनाद्यः ।४।

येनवित्रिभलग्नेन लम्बनं स्थिरीभूतं तस्मात्सायनात् क्रान्त्यंशाः कार्यास्तथा तमेव वित्रिभं दत्तायनांशहीनं सत् चन्द्रं परिकल्प्य लम्बनसंस्कृतपातेन चन्द्रग्रहोक्त्या विक्षेपः कार्यः। अक्षांशाश्च स्थिरा दक्षिणा एव। तेषां त्रयाणामप्येकदिशां या युतिर्भिन्नदिशां च याऽयुतिरन्तरं ते युतिविशेषभागा उच्यन्ते। तेषां या ज्या सा त्रयोदशगुणा खाब्धिभिश्चत्वारिंशता ४० हृता कार्या। ततो लब्धं यत्फलं कलादि साऽवनतिर्भवति। अवनमनमवनतिः। भूम्युच्छ्राय-वशात् दृक्क्षेपमण्डलगत्या ग्राह्यग्राहकबिम्बयोर्याम्योत्तरमन्तर-मित्यर्थः। तस्याश्च युतिविशेषांशवशात् दिक् ज्ञेया। ततो मध्य-ग्रहणकालिकचन्द्रात् तात्कालिकपातेनोक्तवत् विक्षेपः कार्यस्ततो-ऽवनतिचन्द्रविक्षेपयोर्दिगैक्ये यः संयोगो दिग्भेदे यदन्तरं स स्फुट-विक्षेपो भवति। यदि च युतिविशेषांशा नोत्पद्यन्ते तदाऽवनतेरभावा-द्यथागत एव चन्द्रविक्षेपः स्फुट इति। तेन च स्फुटविक्षेपेण चन्द्रग्रहणवद्रविशशिमानैक्यार्द्धमध्यग्रासप्रमाणानयन-पूर्वं स्थित्यर्द्ध-विमर्दार्द्धनाद्यो विधेया इति।

अत्र * वासना॥ यदा स्वदेशाक्षज्यातुल्या वित्रिभस्योत्तरा क्रान्तिज्या भवति तदा वित्रिभलग्नं सममण्डलमध्ये भवति।

---

* ग्रहणकाले रविचन्द्रयोर्याम्योत्तरमन्तरं शरः। अथ लम्बनद्वारा तयोर्लम्बितयोरन्तर-स्वरूपं क्रान्तिवृत्तीयं खण्डमेव साधितं संस्कृतं च निरन्तरीकरणाय। अथ तद्दशेन तयोर्याम्यो-त्तरमन्तरं यदन्यदुपलब्धं तत्संस्कृतादेव शरात् स्थित्यर्धाद्यानयनं समुचितमिति तदेवावनतिनाम्ना साधितं संस्कृतं च चन्द्रविक्षेप इति।

ततोऽवनतेरभावो यतोऽपमण्डले विचिभम् । अपमण्डलविषुवन्मण्डलान्तरं हि क्रान्तिः सा चोत्तरा सती सममण्डलमध्यमभिसरति । दक्षिणेन विषुवन्मण्डलस्य नतत्वात्तावदेव हि सममण्डलविषुवन्मण्डलान्तरम् । स्वाक्षज्याऽपि सैव । ततो यदा स्वाक्षज्यातोऽधिकोत्तरा वित्रिभक्रान्तिज्या भवति तदा सममण्डलमतिक्रम्योत्तरेणार्कवित्रिभस्य नतिः । यदा तु स्वाक्षज्यातो हीना तदा सममण्डलमप्राप्यैवार्कवित्रिभं दक्षिणेन नतं तिष्ठत्यतस्तदा दक्षिणाऽवनतिर्भवति । अथ वित्रिभस्य क्रान्तिज्या दक्षिणा तदा सममण्डलमध्याद्दक्षिणेन विषुवन्मण्डलम् । ततोऽपि दक्षिणेनापमण्डलं तत्र च रविवित्रिभमतो दक्षिणैवावनतिरर्कवित्रिभस्य । एवं चन्द्रमसोऽपि वित्रिभात्स्वक्रान्तिज्यया योज्यम् । एवं सति ये युतिविशेषांशास्ते सममण्डलमध्यात् दृक्क्षेपमण्डले स्ववित्रिभस्य नतांशा उच्यन्ते । तेषां या ज्या सा नतज्या । सा च द्वयोरपि रविचन्द्रवित्रिभयोरपमण्डलविमण्डलावस्थितिवशेन पृथक् भवति । ताभ्यां च त्रैराशिकद्वयेन पृथक् पृथक् फले अवनतिलिप्तारूपे भवतो यद् दक्षिणक्षितिजासन्ने स्ववित्रिभे त्रिज्यातुल्या नतज्या भवति । सममण्डलमध्ये चात्युच्चता सदैव दृक्क्षेपमण्डलस्यातस्तत्र चतस्रोऽवनतिघटिकाः परमा भवन्ति लम्बनघटिकास्तदन्तरे च त्रैराशिकेन नतिघटिका उत्पद्यन्ते । ताश्च रविचन्द्रयोर्द्वयोर्न तुल्या । दृक्क्षेपमण्डलस्योच्चतास्थिरत्वेऽपि अपमण्डलावस्थानवशेन वित्रिभयोर्भेदादतः पृथक् पृथक् फलोत्पादनम् । यदि पुनरपमण्डलविमण्डलसम्पाते चन्द्रवित्रिभं भवेत्तदा द्वयोरपि तुल्या एव नतघटिका भवेयुरतो भुक्त्यन्तरेणैव यत्फलं सा स्फुटाऽवनतिर्भवति । एतच्च भूमध्यविनिर्गतचन्द्रवित्रिभावभेदिरविकक्षाप्रापिसूत्रेण रविवित्रिभदृक्सूत्रेण रविचन्द्रयोजनकर्णाभ्यां भूव्यासार्द्धेन चेष्टकाले दिग्भेदवासनां स्वस्वकक्षामण्डले दर्पणद्वयं बद्धा प्रदर्शयेत् । तत्र प्रथमं त्रैराशिकम् । यदि व्यासार्द्धतुल्यनतज्यया चतस्रोऽवनतिघटिका भवेयुस्तदेष्टनतज्यया कियत्य

इति पृथक् पृथक् वित्रिभद्वयस्य नतिघटिका लभ्यन्ते। ताभिश्च लिप्तानयनाय द्वितीयम्। यदि घटीषष्ट्या स्वकचापप्रदेशे स्वभुक्तितुल्या लिप्ता लभ्यन्ते तदाऽऽभिरवनतिघटिकाभिः कियत्य इति। तत्र प्रथमत्रैराशिके चतुष्कको गुण्यराशिर्द्वितीये च भाजकः षष्टिरनयोश्चतुर्भिरपवर्त्तने जातं गुण्ये रूपं भाजके पञ्चदशकः। अतः स्वस्वभुक्तिनतज्ययोर्घातरूपश्च गुणकः पञ्चदशव्यासार्द्धघातश्च भाजकः। फले चावनतिलिप्तारूपे भवतः। तयोश्चैकदिक्त्वेऽन्तरं भिन्नदिक्त्वे च युतिः स्फुटाऽवनतिर्भवति। सैव रविवित्रिभचन्द्रवित्रिभस्य नतिस्तत्र कालेऽपमण्डलतिर्यक्त्ववशेन यत्रतत्रस्थयोश्च रवीन्द्वोर्बिम्बकेन्द्रान्तरं तावदेवाविक्षिप्ते चन्द्रमसि स्फुटाऽवनतिश्च सैवोच्यते। विमण्डलापमण्डलसम्पातस्थे चन्द्रे स एव स्फुटविक्षेपः। यतो यत्र षट्षष्टिरक्षांशास्तत्राविक्षिप्ते चन्द्रवित्रिभे परमाऽवनतिः सम्भवति। अपमण्डलस्यैव क्षितिजत्वाल्लम्बनस्य च तत्राभावो यत्र तु खाक्षज्यातुल्या चन्द्रवित्रिभस्याविक्षिप्तस्योत्तरा क्रान्तिज्या भवति तत्रावनतेरभावो लम्बनं तु परमम्। तच्चार्कोदयकालेऽपमण्डलस्य सममण्डलोपर्यधःस्वस्तिकाद्यवस्थितत्वादन्तरे चावनतिलम्बनयोरुपचयापचयौ स्वधिया योज्यौ। अत्र चाचार्येण चन्द्रवित्रिभोन्नतज्याया रविचन्द्रभुक्त्यन्तरेणैवमेव फलमुत्पादितम्। यतो रविभुक्तिजा पृथगानीताऽप्यवनतिः शोध्या भविष्यत्येकदिक्त्वे। विक्षेपवशाद्भिन्नदिक्त्वं चेत् तत्रापि परममन्तरे लिप्तात्रिभागमात्रं भवत्यतः स्वल्पान्तरत्वाल्लाघवे न काचित्क्षतिरिति। तत्र रवीन्द्वोर्मध्यमभुक्त्यन्तरम् ७३१ पञ्चदशाहतव्यासार्द्धं च २२५० अनयोरासन्नापवर्त्तकेन षट्पञ्चाशता ५६ ऽपवर्त्तने जाता गुणके त्रयोदश १३ भाजके खाब्धय ४० श्चन्द्रवित्रिभोन्नतज्यायाः फलमवनतिलिप्तारूपा। यदा तु विमण्डलापमण्डलसम्पाते चन्द्रो भवेत्तदाऽवनतिरेव केवला रविचन्द्रबिम्बकेन्द्रान्तरालम्। यदि तु विमण्डले चन्द्रबिम्बमध्यमपमण्डले रविबिम्बमध्यं तदा चन्द्रविक्षेप एव बिम्बकेन्द्रान्तरालम्। ततः स्वापमण्डलाद्याऽवनतिः सिद्धाऽस्ति सा यदि चन्द्र

विक्षेपेण सहैकदिक्का भवति। यदा विक्षेपतुल्यं बिम्बकेन्द्रान्तराल-मुपचितोति द्रष्टुर्भूगोलोपरिस्थितत्वात्तावदेव बिम्बद्वयमध्यान्तरं प्रति-भाति। तत्रैकदिशोर्विक्षेपावनत्योर्योग एव युज्यते। अथ भिन्न-दिक्काऽवनतिस्तदा विक्षेपकृतं यद्बिम्बयोरन्तरं तदवनत्याऽल्पीक्रियते। अतस्तत्रान्तरं युज्यते। एवं कृते दृक्क्षेपसमं केन्द्रान्तरं भवति स स्फुटविक्षेप उच्यते। स्थित्यर्द्धविमर्दार्द्धानां च भुजकोटिकर्णैश्चन्द्र-ग्रहणवद्वासना ज्ञेयेति।

अथ मध्यग्रहणे सिद्धे प्रग्रहणादीनां कालसाधनायार्याद्वयमाह।

प्राग्वल्लम्बनमसकृत्तिथ्यन्तात् स्थितिदलेन हीनयुतात्।
तन्मध्यान्तरयुक्तं स्थितिदलमेवं विमर्दार्द्धम् ॥५॥
अधिकेऽधिकान्तरज्या लम्बनमेवं तदृणधनैकत्वे।
हीने हीनं भेदे तदैक्ययुतमुक्तमन्ते च ॥२॥

लम्बनसंस्कृतो यः समलिप्तकालतिथ्यन्तस्तस्मात् मध्यग्रहणिक-स्थित्यर्द्धेनादौ प्रग्रहणान्वेषणे हीनादन्ते च मोक्षान्वेषणे युतात् प्राग्वन्मध्यग्रहणलम्बनेन सह यदन्तरं तेन युतं तात्कालिकस्थित्यर्द्धं कार्यम्। परं तयोस्तात्कालिकमध्यलम्बनयो ऋणधनैकत्वे सति। यदि लम्बनद्वयमपि ऋणगतं वित्रिभलग्नादूने भवत्यपरं चाधिकस्य वित्रिभलग्नार्कान्तरस्य या ज्या तस्या यल्लम्बनं तस्मिन्नधिके सत्येवं स्थित्यर्द्धसंस्कारः। लम्बनं च खमध्याद्दूरवस्थिते सूर्येऽधिकं भवत्यासन्ने च हीनमिति। यदि चाधिकान्तरज्याया लम्बनं हीनं भवेत्तदा तल्लम्बन-मध्यलम्बनान्तरेण तात्कालिकस्थित्यर्द्धं हीनं कार्यम्। एवं तु ग्रस्तोदिते ग्रस्तास्तमिते च क्षितिजासन्ने कदाचित्संभवति नान्यत्रेत्येवं स्थित्यर्द्धं स्फुटं भवति। यद्येकं लम्बनमृणं भवत्यन्यच्च धनं तदा भेदे सति तयोस्तात्कालिकमध्यलम्बनयोरैक्येन युतं सत्तात्कालिकस्थित्यर्द्धं स्फुटं

भवत्येतच्च तदा संभवति यदैकलम्बनं दिनार्द्धोदर्वाक् द्वितीयं च दिनार्द्धमतिक्रम्य भवति मध्यासन्ने रवौ। एवं च विमर्दार्द्धमपि स्फुटं कार्यम्। प्रग्रहणविमर्दार्द्धे उक्तवच्चन्द्रग्रहणवदिति। एतच्च कर्म प्रतिस्थित्यर्द्धं प्रतिविमर्दार्द्धं वाऽसकृद्भूयो भूयः कार्यम् यावत्स्थित्यर्द्धादयः स्थिरीभवन्ति।

अत्र वासना॥ यावत् स्फुटतिथ्यन्तात् मध्यग्रहणिकं स्थित्यर्द्धं विशोध्यते तावत् प्रग्रहणकालो भवत्येवं प्राप्ते तथा न भवति। यतो मध्यग्रहणकालेऽन्यथाऽपमण्डलसंस्थानमन्यथा च प्रग्रहणकाले तद्वशादर्कोन्नतिवशाच्चान्यल्लम्बनं मध्यग्रहणेऽन्यच्च प्रग्रहणेऽन्यच्चान्य-कालेष्विति स्वस्वकालेषु पृथक् पृथक् लम्बनान्युत्पद्यन्ते। ततः प्रग्रहणकाले स्वीयकाललम्बने संस्कृते यः करणागततिथ्यन्तस्तस्मा-त्स्वस्थित्यर्द्धं शोधयितुमुचितम्। यावदसौ मध्यग्रहणकालिकलम्बनेन संस्कृतस्तिष्ठत्यतो लम्बनान्यतो लम्बनान्तरेण तिथ्यन्तस्य संस्कारो युज्यते। स चाचार्येण स्थित्यर्द्धस्यैव कारितस्तद्द्वारेण तिथ्यन्तेऽपि कृतो भवति। निमीलनादिष्वप्येवमेव ज्ञेयम्। ततो यदि वित्रिभ-लग्नात्प्राक् तात्कालिकलग्नादपरतोऽपमण्डलचतुर्भागस्थे रवौ प्रग्रहण-मध्यग्रहणे भवतस्तदाऽवश्यं मध्यग्रहणलम्बनात् प्रग्रहणिकेन लम्बने-नाधिकेन भवितव्यम्। ततस्तयोर्लम्बनयोरन्तरं स्फुटतिथ्यन्ताद्वि-शोध्यते। येन करणागततिथ्यन्तः प्रग्रहणलम्बनसंस्कृतो भवति। ततश्च स्थित्यर्द्धे विशोधिते प्रग्रहणकालो भवत्येवं प्राप्ते स्थित्यर्द्धस्यैवो-पचितिर्लम्बनान्तरेण कृता तद्विशोधनात्तिथ्यन्तस्यापचितिः कृता भवति। अथ तत्रैवापमण्डलचतुर्भागस्थे रवौ मध्यग्रहणलम्बना-न्मोक्षलम्बनेन न्यूनेन भवितव्यम्। ततो लम्बनान्तरेण मध्यग्रहण-संस्कृततिथ्यन्तोऽधिकः कर्तुं युज्यते येन मोक्षकाललम्बनेन संस्कृतो भवति। अतो लम्बनान्तरं स्थित्यर्द्धे योज्यते। यस्मात् स्थित्यर्द्ध-मपि स्फुटतिथ्यन्ते धनं भविष्यति मोक्षत्वादतो युगपत् द्वयमपि धनं क्रियत इत्युपपन्नम्॥

अथ वित्रिभलग्नादपरेण तात्कालिकलग्नात्पूर्वेण योऽपमण्डल-चतुर्भागस्तत्रस्थे रवौ प्रग्रहणमध्यग्रहणे भवतस्तदाऽवश्यं मध्यग्रहण-लम्बनात् प्रग्रहणलम्बनेन न्यूनेन भवितव्यम्। तत्र च लम्बनान्तरं स्फुटतिथ्यन्ताच्छोधयितुं युज्यते। ततो मध्यमलम्बनेन च ऊनं कृतं तिष्ठत्यतः स्थित्यर्द्धेन सदैकहेलया शोध्यते प्रग्रहणत्वादिति। अथ तत्रैवापमण्डलचतुर्भागे स्थिते रवौ मध्यग्रहणमोक्षौ भवतः। तदा मध्यलम्बनान्मोक्षकेनाधिकेन भवितव्यम्। तेन लम्बनान्तरं धनं स्फुट-तिथ्यन्ते युज्यते। यतो मध्यलम्बनेनाल्पं प्राग्धनं कृतं ततस्तदन्तरं स्थित्यर्द्धेन सह दीयते येन मोक्षलम्बनसंस्कृतस्थित्यर्द्धयुतः करणागत-स्फुटतिथ्यन्तो भवति मोक्षत्वादिति। एवमधिकेऽधिकान्तरज्या लम्बनमेवमित्युपपन्नम्। अथ दिवागतेऽल्पेऽपमण्डलखण्डे मध्यग्र-हणं तदधिके रात्रिमध्ये प्रग्रहणं तदा मध्यग्रहणलम्बनात् प्रग्रहण-लम्बनमूनं भवति तदा ऋणगतयोरपि लम्बनयोरन्तरेणाधिका-स्तिथ्यन्ता युज्यन्ते। बहुना मध्यलम्बनेनापचितत्वादतः स्थित्यर्द्धा-द्विशोध्यते। तद्विशोधनात्तिथ्यन्तस्योपचयो भवति। प्रग्रहणत्वात्त-दपि युज्यते। अथ दिवागतेऽल्पेऽपमण्डलखण्डे मोक्षो भवति तदधिके च रात्रिशेषे मध्यग्रहणं तदा मौक्षिकं लम्बनं मध्यग्रहण-लम्बनादधिकं भवति। अतः क्षयगतयोर्लम्बनयोरन्तरेण स्थित्यर्द्ध-मपचीयते येन तिथ्यन्तोऽपचितो भवति। धनत्वान्मोक्षस्थित्यर्द्धस्य तदपि युज्यते। अथ दिवाशेषेऽल्पेऽपमण्डलखण्डे प्रग्रहणं तदधिके च रात्रिगते मध्यग्रहणं तदा मध्यग्रहणलम्बनात्प्रग्रहणलम्बन-मधिकं भवति। अतो धनगतयोरपि लम्बनयोरन्तरेण तत्र स्थित्यर्द्ध-मपचीयते। येन तिथ्यन्त उपचितो भवति क्षयात्मकत्वात्प्रग्रहण-स्थित्यर्द्धस्य। यतो मध्यग्रहणलम्बनेनाधिकस्तिथ्यन्तः कृतोऽस्ति। अथ दिवाशेषेऽल्पेऽपमण्डलखण्डे मध्यग्रहणं तदधिके च रात्रिगते मोक्षस्तदा मध्यलम्बनान्मौक्षिकमूनं भवति। तत्र धनगतयोरपि लम्बनयोरन्तरेण स्थित्यर्द्धमपचीयते यतो बहुना मध्यलम्बनेन तिथ्य-

न्तोऽधिकः कृतोऽस्ति। स च स्थित्यर्द्धोपचयादपचितो भवति। मोक्षत्वात् स्थित्यर्द्धं हि तिथ्यन्ते धनं भवतीति। एवमधिकान्तरज्या-लम्बने हीनमित्युपपन्नम्। अथ दिवागते रात्रिशेषे वाऽपमण्डल-खण्डे तुल्ये भवतस्तदा मध्यममेव तात्कालिकं स्थित्यर्द्धं प्रग्रहणे मोक्षे वा स्फुटं भवति। तुल्यत्वाल्लम्बनयोरन्तराभावात्। अथैकं लम्बनं वित्रिभलग्नात्प्राक् स्थिते रवावृणमन्यच्च पश्चात् स्थिते धनं भवति तदा तयोर्योगेन स्थित्यर्द्धस्योपचितिर्युज्यते। एवं चाधिकेऽधिकान्तर-ज्येत्याद्यं सर्वमुपपन्नं भवति! शेषं च वलनज्यादिकं यद्ग्रहणोपयोगि तत्सर्वमपि शशिग्रहणवदेव ज्ञेयमिति।

अथेष्टग्रासे शशिग्रहणाद्यो विशेषस्तत्प्रतिपादनायोत्तरे श्लोकः।

अवनत्या स्फुटः क्षेपो बाहुः स्थितिदलाहतः।
स्पष्टस्थित्यर्द्धसंभक्तः स्यात्स्फुटो ग्रहणे रवेः॥

अयमर्थः! वीष्टस्थितिदलात् ग्रहाँस्तात्कालिकीकृत्य शशिग्रहण-वद्यो विक्षेपः स तत्कालावनत्या इष्टकाले वित्रिभलग्नं कृत्वा ये युति-विशेषभागा इत्यादि विधिनोत्पन्नया दिगैक्ये योगेनान्यदिक्त्वे तदन्तरेण स्फुटः कार्यः। यश्च वीष्टस्थितिदलक्षुस्नेत्यादिना बाहुः स प्रग्रहणि-केन वा यत्र प्रश्नस्तत्सम्बन्धिना मध्यमस्थित्यर्द्धेन गुणितस्तत्सम्बन्धिनैव स्पष्टस्थित्यर्द्धेन लम्बनान्तरसंस्कृतेन संहृतः कार्यस्ततो लब्धं यत्फलं स स्फुटः कर्मयोग्यो बाहुर्भवति। निमीलनोन्मीलनबाह्वोरपि स्वस्व-विमर्दार्द्धेनैवमेव स्फुटत्वं विधेयम्।

अत्र वासना त्रैराशिकेन। यदिस्पष्टस्थित्यर्द्धं लम्बनदृग्भेद संस्कृते एतावान् भुजस्तत्करणागतस्थित्यर्द्धे कियानिति। फलमधि-कृतस्थित्यर्द्धानुसारेणापमण्डले भुजो भवतीति।

अथेष्टग्रासात्कालानयने शशिग्रहणाद्यो विशेषस्तत्प्रतिपादनायोत्तरे श्लोकः।

इष्टग्रासाच्च यः कालः स्पष्टस्थित्यर्द्धताड़ितः ।
मध्यस्थित्यर्द्धसंभक्तः स्पष्टतां समवाप्नुयात् ॥

अयमर्थः । इष्टग्रासाद्यः कालः शशिग्रहणवदानीतोऽसौ रविग्रहे स्पर्शे मोक्षे वाऽधिकृतस्पष्टस्थित्यर्द्धेन गुणितोऽधिकृतेनैव मध्यमस्थित्यर्द्धेन भक्तो यत्फलं स स्पष्टकालो भवतीति ।

अत्र वासना त्रैराशिकेन । यदि मध्यमस्थित्यर्द्धेनापमण्डले एतावान् कालस्तदा लम्बनदृग्भेदसंस्कृतस्थित्यर्द्धे कियानिति । फलं दृग्भेदसंस्कृतं वेष्टस्थितिदलं भवतीति ।

इति पण्डित-महादेवात्मज-आमशर्मविरचित खण्डखाद्यकवासनाभाष्ये सूर्यग्रहणाधिकारः पञ्चमः । ग्रन्थः २४० ॥

---

अथोदयास्ताधिकारो व्याख्यायते। तत्र दृश्यत्वं भग्रहाणामुदयोऽदृश्यत्वं चास्तमयश्च। तच्च द्विविधं प्रतिदैवसिकं रविविप्रकर्षसन्निकर्षजं च। तत्र प्रतिदैवसिक क्षितिजादूर्ध्वाधोगमनवशेन रविविप्रकर्षसन्निकर्षजं च रविरश्मिभिरतिरोहितत्वतिरोहितत्ववशेन भवति। सर्वेषामपि ग्रहाणां नक्षत्राणां च प्रतिदैवसिकं दृश्यत्वं पूर्वस्यामदृश्यत्वं च पश्चिमायां प्रवहभ्रम्यमाणभपञ्जरस्य क्षितिजादूर्ध्वाधोऽवस्थानवशाद्भवति। रविवशतश्च यत् दृश्यत्वं तद्रवेरूनभुक्तीनां कुजगुरुसौराणां वक्रितयोर्ज्ञशुक्रयोश्च पूर्वस्यां रविविप्रकर्षाद्भवति। अदृश्यत्वं च पश्चिमायां रविसन्निकर्षात्। अवक्रयोर्ज्ञशुक्रयोश्चन्द्रस्य च रवेरधिकभुक्तित्वेन तत्सन्निकर्षाददृश्यत्वं पूर्वस्यां दृश्यत्वं च रविविप्रकर्षात्पश्चिमायाम्। तथा च करणोत्तमे—

लघुगतिरिह हीनः खेचरः प्राचि दृश्यः
सवितुरधिकभुक्तिः प्राचि वाऽस्तं प्रयाति।
गुरुगतिरधिकश्चेत् दृश्यते पश्चिमायां
गुरुरपि गतिहीनश्चास्तमेति प्रतीच्याम्॥

एतदेवोत्तरे श्लोकेन—

ग्रहो रवेरूनगतिः प्राचि दृश्योऽपरेऽस्तभाक्।
पश्चात् दृश्योऽधिकगतिः पूर्वस्यामस्तभाग्भवेत्॥

अतः पूर्वस्यामुदयास्तान्वेषणे औदयिकौ रविग्रहौ कार्यौ। पश्चिमायां चास्तकालिकाविति। तथा च करणोत्तमे—

प्रातः प्रागिनखचरौ स्फुटौ विधेयौ
वारुण्यां पुनरुदयास्तयोर्दिनान्ते।
अस्तीत्थं मतमुदयेऽपि पश्चिमायां
प्रागस्तेऽप्युदयजमेव दृष्टिकर्म॥१॥

तत्र रवेर्यावता विप्रकर्षेण सन्निकर्षेण वा यस्य ग्रहस्य दृश्यत्व-मदृश्यत्वं वा भवति तत्प्रतिपादनायार्यामाह।

शुक्रगुरुज्ञार्किकुजाः कालांशैर्द्व्युत्तरोत्तरैर्नवभिः।
दृश्यादृश्या दृक्कर्मणा रवेर्द्वादशभिरिन्दुः॥१॥

शुक्रश्च गुरुश्च ज्ञश्चार्किश्च कुजश्च एते ग्रहा दृक्कर्मद्वयसंस्कृता रवेरन्तरजैर्नवभिः कालांशैर्द्वाभ्यां द्वाभ्यां उत्तरोत्तराधिकैर्यथासंख्यैर्दृश्या अदृश्याश्च भवन्ति। तत्र कृतदृक्कर्मा शुक्रो नवभिः ९ कालांशै रव्यन्तरजैर्दृश्योऽदृश्यश्च भवति। गुरुरेकादशभिः ११। ज्ञो बुधस्त्रयो-दशभिः१३। आर्किः शनिः पञ्चदशभिः१५। कुजो भौमः सप्तदशभिः१७। इन्दुर्द्वादशभि १२ रिति। अत्र शुक्रज्ञयोः सामान्योक्ता अपि कालांशा वक्रिणोरेकैकेन हीना अवक्रिणोस्त्वेकैकाधिकाः। अतः शुक्रस्य वक्रिणोऽष्टौ ८। अवक्रिणश्च दश १० बुधस्य वक्रिणो द्वादश १२। अवक्रिणश्च चतुर्दश १४ ति! तथा च ब्रह्मसिद्धान्ते—

मानाल्पत्वात्पश्चादुदयोऽस्तमयः सितस्य दशभिः प्राक्!
पश्चान्मानमहत्त्वादस्तमयोऽष्टाभिरुदयः प्राक्॥
ज्ञस्यैवं मनुसूर्यैः पटितैः कुजजीवसूर्यपुत्राणाम्।
उदयः प्रागस्तमयो मानसमत्वाद्भवति पश्चात्॥

इति। एतदेवोत्तरे श्लोकेन—

कालांशा एक हीनाः स्युर्वक्रिणोर्बुधशुक्रयोः।
एकाधिकास्तु ते ज्ञेयास्तयोः प्राग्मार्गगामिनोः॥

कालस्य प्राणराश्यात्मकस्य ये षष्ठ्यंशास्ते कालांशाः। प्राणानां कलानां च भ्रमणसाम्यात्। तैश्च षड्भिर्घटिका भवन्ति। तेषां चोप-लब्धिरेव वासना। अत एव पूर्वाचार्यैरुपलब्धा इति।

अथ दृक्कर्मोच्यते। तच्च द्विविधम्। आयनम्। आक्षजं च। तत्र यदायनं तद्याम्योत्तरायनवशादुत्पद्यते। अतो निरक्षदेशेऽपि तद्भवति। अक्षांशवशाच्चाक्षजम्। तच्च साक्ष एव। तत्र तावत् प्रथममायनदृक्कर्मानयनं तत्संस्कारश्चाह।

विक्षेपसत्रिराशिज्याघातादिन्दुगाग्निलब्धकलाः।
विक्षेपायनसाम्ये शोध्या भेदे ग्रहे क्षेप्याः॥२॥

सह त्रिभी राशिभिर्वर्तत इति सत्रिराशिग्रहस्तस्य भुजज्या। अत्र ज्येति सामान्यग्रहणेऽपि उत्क्रमेणैव * सत्रिराशेर्ग्रहस्य ज्या ग्राह्या। ततो विक्षेपस्य सत्रिराशिज्या च तयोर्द्वयोर्घातो गुणनं तस्मादिन्दुगाग्निभि ३७१ र्लब्धा याः कलास्ता विक्षेपायनयोः साम्ये दिगैक्ये ग्रहाच्छोध्याः। दिग्भेदे च ग्रहे क्षेप्याः। एतदुक्तं भवति। यस्य ग्रहस्योदयोऽस्तमयो वाऽन्विष्यते तस्माद्यथासम्भवमौदयिकादस्तकालिकाद्वा ग्रहात् ग्रहयुत्यधिकारे वक्ष्यमाणविधिना विक्षेपः कार्यः। ततस्तस्मिन्नेव ग्रहे राशित्रयमयनांशांश्च दत्त्वोत्क्रमखण्डकैर्ज्या ग्राह्या। तां स्वविक्षेपेण गुणयित्वा एकसप्तत्यधिकशतत्रयेण ३७१ भजेल्लब्धं कलादि फलं भवति। तच्च यदि विक्षेपस्य ग्रहायनस्य चैकदिक्कं भवेत् तदा ग्रहात् शोध्यम्। भिन्नदिक्कं चेत्तदा ग्रहे क्षेप्यम्। एवं कृते कृतायनदृक्कर्मा ग्रहो भवति। विक्षेपस्य यथोक्तैव दिक्। ग्रहस्य तु मकारादिराशिषट्के उत्तरमयनं कर्कादिषट्के च दक्षिणम्। तत्तु ग्रहस्य स्वरूपस्थस्यैव ग्राह्यम् न तु राशित्रययुतस्य।

एतदेवोत्तरे श्लोकेनोक्तम्—

* लल्लमतानुसारिणश्चतुर्वेदाचार्यस्य व्याख्यानुसारिणीयमुक्तिः। भास्करतो नवीनोऽप्ययं टीकाकारः कथमेवं व्याख्यातीति चित्रम्।

स्वरूपादयनं ग्राह्यं सत्रिभाद्गोलकल्पना ।
वित्रिभस्य क्रमेण ज्या सत्रिभस्योत्क्रमेण तु ॥

अत्र कैश्चित् क्रमज्यैवोक्ता । तथा चाह भास्करः-
दृष्टिकर्म वलनं च केनचित्
भ्रान्तितः कथितमुत्क्रमज्यया ।
तत्कृतं तदनुगैस्ततोऽपरै-
रन्धपूरुषपरम्परोपमैः ॥

अस्माकं चतुर्वेदमतानुसरणमेव श्रेयः प्रतिभाति । तेन चोत्क्रमज्यैवाभिहितेति ।

अत्र वासना । निरक्षदेशे यदा मकरादिस्थः कर्कादिस्थो वा ग्रहः क्षितिजे भवति तदा यैव द्रष्टुर्दक्षिणोत्तरा सैव ग्रहस्य । क्षितिजमण्डलगत्याऽपमण्डलदक्षिणोत्तराऽपि सैवाविक्षिप्ते ग्रहेऽतोऽयनादौ दृक्कर्माभावः । यदा तु मेषादौ तुलादौ वा स्थितो ग्रहः क्षितिजे भवति तदा परमक्रान्त्यंशैरपमण्डलदक्षिणोत्तरा वलिता भवति निरक्षदेशेऽपि परमक्रान्त्यंशैस्तिर्यक्त्वादपमण्डलस्य । अवान्तरे च त्रैराशिकेन वलनोत्पादनम् । तच्चायनादेरारभ्योत्क्रमेणोपचीयते उत्क्रमक्रान्तिज्ययाऽतस्त्रैराशिकद्वयम् । यदि त्रिज्यातुल्योत्क्रमज्यया परमक्रान्तिज्या भवति तदेष्टोत्क्रमज्यया कियतीति । फलमुत्क्रमक्रान्तिज्या । ततो द्वितीयम् । यदि त्रिज्याकर्णतुल्यकर्णे उत्क्रमक्रान्तिज्यातुल्या कोटिस्तदा विक्षेपकर्णे कियतीति । अत्र त्रैराशिकद्वयेऽपि त्रिज्या भागहारोऽतस्तद्वर्गो भाजकस्तथा प्रथमत्रैराशिके परमक्रान्तिज्या गुणकस्तयोर्द्वयोर्गुणकभाजकयोरासन्नापवर्तकेन परमक्रान्तिज्यया अपवर्तने सति गुणके रूपं भाजके चेन्द्वगाग्नयोऽतोऽत्तराशित्रयस्य ग्रहस्योत्क्रमज्याया विक्षेपो गुणको भाजक इन्द्वगाग्नयः ३७१ । फलं विक्षेपवृत्ते याम्योत्तरावगाहिनि पूर्वापरा कोटिः ।

सूर्यात् पूर्वेण परेण वा अपमण्डलभोगप्रदेशात् ग्रहो नीयते। ततो यदोदग्गते मकराद्यपमण्डलार्द्धे ग्रह उत्तरविक्षिप्तो भवति तदा विक्षेपवृत्तकोट्या परत आनीयते। तेन विक्षेपायनसाम्ये फलं शोध्यते। अथ दक्षिणविक्षिप्तो ग्रहस्तदा विक्षेपवृत्तकोट्या पूर्वतो नीयते। ततो दिग्भेदे फलं योज्यते। अथ दक्षिणगते कर्काद्यपमण्डलार्द्धे ग्रहो दक्षिणं नीयते तेन तत्र फलं शोध्यते। अथोत्तरविक्षिप्तस्तदा विक्षेपवृत्तकोट्या पूर्वेण नीयते। तेन तत्र फलं योज्यते। एतत्सर्वं गोले प्रतिशरं क्षितिजग्रहयुक्तापमण्डलप्रदेशयोः सम्पातं मध्ये कृत्वा विक्षेपतुल्यव्यासार्द्धेन याम्योत्तरं वृत्तं बद्ध्वा प्रदर्शयेदिति।

अथ साक्षे देशेऽक्षोन्नतिवशात् क्षितिजोन्मण्डलयोर्यदन्तरं तत्-संस्कारेणोदयास्तलग्नानयनयोरुपयुक्तमाक्षजं दृक्कर्माह।

विषुवच्छायागुणिताद्विक्षेपात् द्वादशोद्धृतात्सौम्यात्।
फलमृणधनं धनर्णं याम्यादुदयास्तमयलग्ने ॥३॥

ग्रहस्य तात्कालिकस्वविक्षेपात् स्वदेशविषुवच्छायागुणितात् द्वादशभिर्भक्ताद्यत्कलादि फलं यद्यदि सौम्यविक्षेपोत्पन्नं भवेत्तदुदये-ऽन्विष्यमाणे प्राक्क्षितिजस्थे आयनदृक्कर्मसंस्कृतग्रहे ऋणं कार्यम्। अस्तमये च ऋणमेवमाक्षजे दृक् कर्मणि कृते ग्रहस्योदयास्तलग्ने भवतः। पूर्वस्यां रविवशादस्तेऽप्यन्विष्यमाणे उदयलग्नं कार्यं पश्चि-मायां तूदयेऽप्यन्विष्यमाणेऽस्तलग्नम्। यतः प्राक् पश्चाद्वा क्षितिजादूर्ध्वाधोभावेनैव ग्रहाणामुदयास्तौ भवत इत्येतदेवोक्तं आर्ययोक्तम्—

प्रागस्तेऽप्यौदयिकं पश्चादुदयेऽपि चास्तविधिनैव।
दृक्कर्म खेचराणां विधेयमाक्षं सदा गणकैः॥

अत्र वासना । अयनवशाद्विक्षेपेण योऽपमण्डलस्य प्रदेशो ग्रहात्समे दक्षिणोत्तरे सिद्धस्तेन प्रदेशेन सह ग्रहस्योदयोऽस्तमयो वा भवेद्यद्यक्ष-वशाद्विषुवन्मण्डलस्य तिर्यक्त्वं न स्यात् । यावच्च साक्षे देशे तिर्यक्त्व-मस्ति । तद्वशेनापमण्डलस्यापमण्डलवशेन विमण्डलस्यातो विमण्ड-लस्थो ग्रहः प्रथमदृक्कर्मसंस्कृतापमण्डलप्रदेशात् प्राक् पश्चाद्वा दृश्यते । ततः स्वक्रान्तिज्याकोट्या क्षितिज्याभुजेनाग्रया कर्णेन वृत्तं बद्ध्वा क्षेत्रं प्रदर्श्य तन्मध्येऽन्यल्लघु क्षेत्रं प्रकल्पयेत्तत्र विक्षेपतुल्यया कोट्या यो भुज-स्तत्फलमिह । तत्र त्रैराशिकम् । यदि लम्बज्याकोटेरक्षज्या भुजस्तद्विक्षेपकोटेः केति । अत्रासन्नापवर्त्तकेन कोटिभुजतुल्ययोर्वा लम्बज्यास्थाने द्वादशकोऽक्षज्यास्थाने विषुवच्छाया प्रकल्पिता । फलं विक्षेपकोटेर्भुजो ग्रहस्तत्क्रान्तिज्या-स्वक्रान्तिज्याकृतयोः क्षितिजयो-रन्तरमित्यर्थः । तावता भुजेन क्षितिजादुपर्यधो वा ग्रहो भवति । प्रथमदृक्कर्मसिद्धापमण्डलप्रदेशोदयकालेन धनमृणं वा क्रियते । तत उक्तं सौम्यविक्षेपोत्पन्नं फलमुदये प्राक्क्षितिजस्थिते ग्रहे ऋणमस्त-मये पश्चात् क्षितिजस्थिते ग्रहे धनं कार्यम् । याम्यविक्षेपोत्पन्नं च धनमुदये प्राक् क्षितिजस्थे पश्चात् क्षितिजस्थे त्वस्तमये ऋणमिति । यतो यद्युत्तरविक्षिप्तो ग्रहस्तदा प्रथमं ग्रहस्योदयः पश्चादपमण्डल प्रदेशस्य । भपञ्जरस्य तिर्यक्त्वात् । अथ दक्षिणे विक्षिप्तो ग्रहस्तदा प्रथममपमण्डलप्रदेशस्योदयः पश्चाद्विमण्डलस्थग्रहस्येत्येवमुदये वैप-रीत्यम् । यतो विमण्डलस्य प्रथममर्द्धमुत्तरेण द्वितीयं च दक्षिणेना-पमण्डलात्तदुदयलग्नाच्चावश्यमर्द्धचक्रान्तरितेनास्तलग्नेन भवितव्यम् । तत्र च प्रदेशे विक्षेपो विपरीतस्तुल्यस्तस्माच्च यत्फलं तद्विपरीतमेवो-दयात् संस्कार्यमत एव षड्राशियुताद्विक्षेपो न क्रियते । क्षितिजो-न्मण्डलान्तरस्य तदा तुल्यत्वात् । अत एव गोलभेदेन भिन्नानामपि मेषादीनां पूर्वस्यां स्वदेशे राश्युदयानां उदयराशिवशेन पश्चिमा-यामस्तमयस्तुल्यत्वाच्चापस्येति । एतच्च दृक्कर्मद्वयमपि स्थूलम् । यतः प्रथमं दृक्कर्मफलं नानुपातोक्तं निरक्षराश्युदयेन द्वितीयं न व्यासार्द्धे

परिणामितश्च चापमण्डलोक्ततं स्वदेशराश्युदयेन। एतच्च स्वल्पमन्तरम्। अत्राचार्येण गतानुगतिकतयोपेक्षितमेवं च सूक्ष्मं भवति प्रथमं दृक्कर्मफलं तद्राशिकलाभिर्हत्वा लङ्कोदयप्राणैर्भजेत् लब्धं सूक्ष्मं भवति। द्वितीयं तु तत्क्रान्तिस्वक्रान्तिभ्यां पृथक् पृथक् चरप्राणानुत्पाद्य तेषां तुल्यान्यदिशामन्तरसंयोगौ कृत्वा तं प्राणराशिं राशिकलाभिः सङ्गुण्य स्वोदयप्राणैर्भजेल्लब्धं सूक्ष्मं भवति।

तथा च भास्करसिद्धान्ते—

आयनं वलनमस्फुटेषुणा
सङ्गुणं द्युगुणभाजितं हृतम्।
पूर्णपूर्णधृतिभिर्ग्रहाश्रित-
व्यग्रभोदयहृदायनाः कलाः ॥१॥

ब्रह्मसिद्धान्ते च।

तत्स्वक्रान्तिज्याभ्यां चन्द्रादीनां पृथक् पृथक् प्राणान्।
कृत्वाऽर्कवत्तदन्तरसंयोगौ भिन्नतुल्यदिशाम् ॥१॥

अथ प्रतिदैवसिकस्य सूर्यवशजस्य चोदयास्तमयस्य प्राक्पश्चात्त्वप्रतिपादनपूर्वं रविग्रहोदयलग्नास्तलग्नान्तरघटिकानयनमाह।

**प्रागूनमाद्यमधिकं पश्चाल्लग्नाद्ग्रहोदयोऽस्तमयः।**
**षड्भयुतमन्यमुदयैर्घटिकाः कृत्वोनमधिकसमम् ॥४॥**

ग्रहस्याद्यमुदयलग्नं लग्नात्तात्कालिकलग्नाद्यद्यूनं तदा प्राक् प्रथमं ग्रहस्योदयः। पश्चाद्रविलग्नस्याधिकं चेत् ग्रहोदयलग्नं तदा प्रथमं रविलग्नस्योदयः पश्चाद्ग्रहस्योदयलग्नोक्ततस्येति। अयमर्थोऽप्येवमस्तविधिनाऽत्रजदृक्कर्मसंस्कृतग्रहास्तलग्नात् ज्ञेयः। अन्यद्यदाऽस्तलग्नं तत् षड्भयुतं कार्यम्। ततः स्वदेशोदयैरूनमधिकसमं

त्रिप्रश्नोक्त्या कृत्वा घटिकाः कार्याः। अयमर्थः। यदा प्रतिदैवसिको ग्रहस्योदयोऽस्तमयो वाऽन्वेष्यो भवति तदा यथासम्भवं दिवा रात्रौ वौदयिकमस्तकालिकं वा तं ग्रहं रविं च स्फुटीकृत्योदयेऽन्वेष्टव्ये दृक्कर्मद्वयेन ग्रहस्योदयलग्नं कार्यम्। तादृशेऽर्कलग्ने तस्य ग्रहस्योदयो भवत्यस्तेऽन्वेष्टव्येऽस्तलग्नं विधाय तत् षड्भयुतं कार्यम्। तादृशेऽर्कास्तलग्ने तस्य ग्रहस्यास्तमयो वाच्यः। ततस्तात्कालिकरविलग्नस्य दृक्कर्मद्वयसंस्कारेण कृतग्रहोदयास्तलग्नस्य चायनांशान् दत्वा अन्तरात् त्रिप्रश्नोक्त्योनं अधिकसमं कृत्वा स्वदेशराश्युदयैर्घटिकाः कार्याः। तावतीभिर्घटिकाभिरूनस्य ग्रहलग्नस्य प्रथमं रात्रिशेषे दिवाशेषे वोदयोऽस्तमयो वा वाच्योऽधिकस्य च पश्चात् दिवागते रात्रिगते वेति। ततस्तेन कालेन ग्रहार्कौ तात्कालिकीकृत्य पुनर्ग्रहे वा दृक्कर्मद्वयं कृत्वोदयास्तलग्ने विधायान्तरात्पुनः कालः साध्यः। पुनरेवं तावद्यावत्कालः स्थिरो भवति। तस्मिन् काले तत्र दिने तस्य ग्रहस्योदयोऽस्तमयो वा प्रतिदैवसिको वाच्य इति। तद्यथा। पौर्णमास्यां यदोदयोऽन्विष्यते तदाऽर्कास्तकालिकौ रविचन्द्रौ स्फुटीकृत्य कृतायनदृक्कर्मणि चन्द्रे उदयविधिनाऽऽक्षजं दृक्कर्म कार्यम्। तच्चन्द्रोदयलग्नम्। रवौ च राशिषट्कं दत्त्वाऽर्कास्तलग्नं कार्यम्। ततो यदि रव्यस्तलग्नाच्चन्द्रोदयलग्नमूनं भवेत्तदा दिवाशेषकाले चन्द्रोदयोऽभ्यधिकं तद्रात्रिगते तदन्तरात्कालं साधयित्वा तेन रविचन्द्रौ तात्कालिकीकृत्य पुनरेवं तावद्यावत् कालः स्थिरो भवति तेन कालेन चन्द्रोदयो भवति। तथा चन्द्रास्तान्वेषणे आगामिरव्युदयकाले रविचन्द्रौ स्फुटीकृत्य कृतायनदृक्कर्मणि चन्द्रेऽस्तविधिनाऽऽक्षजं दृक्कर्म कृत्वा राशिषट्कं च दत्त्वा चन्द्रास्तलग्नं कार्यम्। तत औदयिकार्कात् चन्द्रास्तलग्न * वाच्योऽधिके दिवागते तावतीति। यदा पुनरन्तरादसकृद्यः कालस्तेन

* "ऊने रात्रिशेषे चन्द्रास्तो" इति त्रुटिरिवाभाति।

यदि चन्द्रास्तलग्नमौदयिकार्कान्न्यूनं तदा रात्रिशेषे चन्द्रास्तो वाच्योऽधिके तु दिवागते तावतीति। यदा त्वर्कवशतो ग्रहस्योदयोऽस्तमयो वाऽन्विष्यते तदा यथाकालं रविं ग्रहं च स्फुटीकृत्य चिन्तयेदयं ग्रहो रवेरूनभुक्तिरधिकभुक्तिर्वा। ततो यदि रवेरूनभुक्तिः स न्यूनभोगा भवेत्तदा ग्रहः पूर्वस्यामुदेति। एष्यति उदितो वा। यदि रवेरूनभुक्तिः सन्नधिकभोगो भवेत्तदा पश्चिमायामस्तमेति। एष्यत्यस्तमितो वा। यदा तु रवेरधिकभुक्तिः सन् अधिकभोगो भवेत्तदा पश्चिमायामुदयान्वेषणम्। अथाधिकभुक्तिः सन् न्यूनभोगो भवेत्तदा पूर्वस्यामस्तान्वेषणम्। ततः पूर्वस्यामुदयेऽस्ते वा औदयिकस्य ग्रहस्योदयलग्नं कार्यम्। पश्चिमायां तूदयेऽस्ते वाऽस्तकालिकस्यास्तलग्नं कार्यम्। ततस्तस्य तात्कालिकरवेश्चान्तरघटिकाः साध्याः। वासना चात्रापमण्डलभोगेन स्पष्टैव।

अथार्कवशग्रहोदयास्तान्वेषणे रविग्रहोदयास्तलग्नयोरन्तरे या घटिका उत्पन्नास्ताभिः कालांशानयनपूर्वं रविवशाद्ग्रहोदयास्तमययोरतीतानागतकालपरिज्ञानाय खण्डखाद्यकोत्तरे श्लोका यथा।

ग्रहसूर्यान्तरे नाड्यः कालांशाः षड्गुणाः स्मृताः।
उक्तकालांशकेभ्यस्तेऽधिकोना गतैष्यकः॥
उदयोऽस्तमयो व्यस्तो दिग्भिर्निघ्नं तदन्तरम्।
पुनर्ग्रहकलानिघ्नं ग्रहाक्रान्तोदयेन तु॥
भक्तं विभाजयेद्भुक्त्योरन्तरेणार्कखेटयोः।
भुक्तियोगेन वक्रस्थे संलब्धैरसकृद्दिनैः॥

अयमर्थः। दृक्कर्मद्वयसंस्कारेणोदयास्तलग्नीकृतस्य ग्रहस्य तात्कालिकार्कस्य चान्तरे या घटिका उत्पन्नास्ताः षड्गुणिताः सत्यः कालांशा भवन्ति। ते चोक्तस्वस्वदृश्यादृश्यकालांशेभ्यो यद्यधिका भवेयुस्तदाऽतीत उदयो वाच्योऽथोनास्तदा चैष्योऽस्तमयश्चास्तांशेभ्यो यद्यत्र कालांशा उक्तकालांशेभ्योऽधिकास्तदैष्योऽस्तमयो वाच्योऽथो-

नास्तदाऽतीत इति । ततस्तेषामुभयेषामपि यदन्तरं तद्दशभिर्गुणितं सत् पुनर्गृहकलाभिरष्टादशभिः शतैर्गुणयेदेवं विधं राशिं ग्रहाक्रान्त-स्वदेशराश्युदयेन भक्तं सदर्कग्रहयोर्भुक्त्यन्तरेण भजेदथ ग्रहो वक्री भवेत्तदा भुक्तियोगेन भजेत् फलं दिनादि भवति। तेनार्कग्रहौ मध्यमौ तात्कालिकौ कृत्वा स्फुटीकृत्य च ग्रहस्योदयलग्नमस्तलग्नं वा यथाप्राप्तं विधाय पुनरन्तरात् कालः साध्यः। एवं तावद्यावत्कालः स्थिरीभवति। तत्र दिने तस्मिन् काले तस्य ग्रहस्योदयोऽस्तमयो वा वाच्य इति।

अत्र वासना। प्राणानां कलानां च भ्रमणसाम्यात् प्राणराशि-रपि षष्ट्या भक्तोंऽशा भवन्ति। षड्भक्ताश्च पलानि भवन्ति। अतो रवेरुदयास्तलग्नीकृतग्रहस्य चान्तरघटिकाः षड्गुणिताः कालांशा भवन्ति। कालांशपलानि भवन्त्यतः कालांशानामन्तरं दशगुणितं फलरूपं भवति। तस्मात् त्रैराशिकेन फलानयनम्। यदि ग्रहाक्रान्तोदयप्रमाणेनाष्टादशशतानि लिप्ता भवन्ति तदाऽमी-भिरन्तरफलैः कियत्य इति। फले लिप्तास्ताभिस्त्रैराशिकेन कलानय-नम्। यद्यर्कग्रहयोर्भुक्त्यन्तरेण भुक्तियोगेन वा एको दिवसस्तदेता-भिर्लिप्ताभिः कियदिति। शेषं स्पष्टम्।

अथागस्त्योदयार्कावाह।

राशिचतुष्केण यदा स्वाक्षांशयुतेन भवति तुल्योऽर्कः।
उदयोऽगस्त्यस्य तदा चक्रार्धाच्छोधितेऽस्तमयः॥

यदा स्वदेशाक्षांशयुतेन राशिचतुष्केण तुल्योऽर्को भवति तदा-ऽऽस्त्यस्योदयो वाच्यः। तस्मिन्नेवोदयार्के चक्रार्धाच्छोधितेऽगस्त्य-स्यास्तार्को भवति। यस्मिन्नहनि यावति काले उदयार्कसमः-स्फुटार्को भवति तस्मिन्नहनि तावति कालेऽगस्त्योदयोऽस्तार्कसमे चास्तमय इति। "एतच्चागस्त्यार्कानयनं ब्रह्मगुप्ताचार्यकृतमेव न

भवति ।" इति भट्टोत्पलः । वासनया च नोत्पद्यते । यथा चोत्पद्यते तथा भग्रहयुत्युत्तरे व्याख्यास्यते ।

अगस्त्यास्तोदयार्कांशाः सप्तशैलाः स्वराङ्कका: ।
अष्टघ्नविषुवच्छायाहीनयुक्ताः स्वदेशजाः ॥

इति भारद्वाजेन "लघुमानसाख्य" करणे उक्तं तत्प्रमाणेन यत्र विषुवच्छायांगुलादि ५।२० तत्रोदयास्तार्कौ ४।१९।४०—१।४।२० ॥ इति पं० महादेवात्मज आमशर्मविरचिते खण्डखाद्यकवासनाभाष्ये उदयास्ताधिकारः षष्ठः ॥६॥

---

अथ शृङ्गोन्नत्यधिकारो व्याख्यायते। तत्रादावेव चन्द्रस्य चरदलानयनमार्ययाह।

त्रिखमुनिभि ७०३ रिषुत्रिशरै ५३५-
द्विनखैः २०२ संशोधितैः शशिक्रान्तेः।
चरदलखण्डानीन्दोः
क्रमोत्क्रमाच्चरदलं साध्यम् ॥१॥

त्रिखमुनिभिस्त्र्यधिकसप्तशतैरिषुत्रिशरैः पञ्चत्रिंशदधिकपञ्चशतैर्द्विनखैर्द्व्यधिकशतद्वयेन एभिस्त्रिभो राशिभिश्चन्द्रस्य स्वक्रान्तेः शोधितैर्यथासङ्ख्यं त्रिप्रश्ने प्रत्येकं राशित्रयस्य यानि स्वदेशचरखण्डानि उत्पादितानि तानि लभ्यन्ते। एवमिन्दोश्चरदलं क्रमोत्क्रमाभ्यां साध्यम्। एतदुक्तं भवति। इष्टदिने इष्टकालिकं चन्द्रं स्फुटीकृत्य तत्रायनांशान् दत्त्वा त्रिप्रश्नोक्त्योत्पन्नक्रान्तिं स्वविक्षेपसंस्कृतं कर्मभूमौ संस्थाप्य राशित्रयोक्तं स्वदेशचरखण्डकं ग्राह्यम्। ततोऽपि यद्यवशेषं स्यात्तदाद्वितीयस्वदेशचरखण्डकेन हत्वा इषुत्रिशरैर्भजेल्लब्धं चतुर्णां खण्डकानां ऐक्ये योजयेदेवं परमं चान्द्रं चरदलं भवति। तस्य च क्रान्तिवशात् दिगवधारणीया। यच्च त्रिखमुनिप्रभृतिषु शोध्यमानेषु शेषं भवति तस्मिन् भोग्यचरखण्डकगुणिते त्रिखमुनिप्रभृतिषु यदशुद्धान्ते तेन भक्ते यल्लब्धं तेन भुक्तचरखण्डकैक्ये युक्ते तद्दैवसिकं चान्द्रं चरदलं भवति। तेन च त्रिप्रश्नोक्त्या दिनरात्री साधयेत्तच्चान्द्रमहोरात्रं भवति। उपलक्षणत्वात्तदन्येषामपि ग्रहाणां स्वस्वक्रान्त्यैवमेव स्वचरदलं स्वस्वाहोरात्रं च साध्यमिति।

अत्र वासना। त्रिखमुनिप्रभृतयो यथाक्रमं राशित्रयस्य क्रान्तिचापानि त्रीणि स्वदेशचरखण्डान्यपि राशित्रयस्य त्रीणि भवन्ति। ततो यथासङ्ख्यं शशिक्रान्त्या तद्राशिचरखण्डकं लभ्यते। क्रान्तिमूल-

त्वाच्चरदलस्य। शेषेण त्रैराशिकम्। यद्यशुद्धराशिक्रान्तिचापेन तत्संख्यमभुक्तं राशेः स्वदेशचरखण्डकं लभ्यते तदनेन शुद्धशेषक्रान्तिचापेन कियदिति! अत्र क्रान्तिचापखण्डकचरदलखण्डकराश्योर्द्वयोरपि स्वातन्त्र्येण पृथक् पृथक् निष्पन्नत्वात् स्पष्टखण्डकस्य नावकाशः। लब्धं च भुक्तैक्ययुतं चन्द्रस्य चरदलं भवति। यदा तु चन्द्रादिग्रहस्य विक्षेपतत्क्रान्त्योरेकदिक्त्वे योगे सति तत्क्रान्तेः परमक्रान्तित आधिक्यं भवति तदोत्क्रमेणापि चरखण्डकं ग्राह्यम्। यतो विक्षेपेण यः स्वक्रान्त्युपचयः स आसन्नस्यैव युज्यते अव्यवहितस्यात उत्क्रमेणेवाधिकस्य चरानयनमुपपन्नमिति।

अथ रविचन्द्रयोः स्वस्वक्रान्तिभ्यां चान्द्रभुजानयनाय सार्द्धमार्यामाह।

**अर्कशशिक्रान्तिकलान्तरैक्यजीवा समान्यगोलकयोः।**
**चन्द्रच्छायाकर्णेन सङ्गुणा लम्बकविभक्ता ॥२॥**
**सदृशैर्युताऽन्यथोना विषुवच्छायाऽङ्गुलैर्भुजो याम्ये।**

अर्कस्य शशो च तयोः समान्यगोलकयोर्याः क्रान्तिकलास्तासां यथासंख्यं यदन्तरैक्यं तस्य या जीवा सा चन्द्रच्छायाकर्णेन सङ्गुणा स्वदेशलम्बज्यया विभक्ता सती याम्यैः स्वदेशविषुवच्छायाङ्गुलैः सदृशैरेकदिक्कैर्युताऽन्यथा भिन्नदिक्त्वे ऊना कार्या। एवं चन्द्रस्य स्वभुजो भवति। एतदुक्तं भवति। चन्द्रशुक्लशृङ्गोन्नत्यन्वेषणं शुक्लपक्षद्वितीयाया मस्तकालिकान् कृष्णपक्षे चतुर्द्दश्यामौदयिकान् रविचन्द्रचन्द्रोच्चपातान् कृत्वा रविचन्द्रौ बीजादिसंस्कारपूर्वं स्फुटीकृत्य तयोः सायनयोः क्रान्तौ विधाय चन्द्रक्रान्तिः स्वविक्षेपेण संस्कार्या। तयोश्च क्रान्त्योरेकदिकत्वेऽन्तरं भिन्नदिकत्वे चैक्यं कार्यम्। ततस्तस्यान्तरस्यैक्यस्य च यथाप्राप्तस्य जीवा ग्राह्या। ततश्चन्द्रोदयास्ताधिकारोक्त्या दृक्कर्मद्वयेनास्तलग्नमुदयलग्नं वा यथासम्भवं कृत्वा चन्द्रस्य स्वक्षितिजादुन्नतं कालं साधयेत्। तं प्रागुक्तविधिना निष्पन्नचान्द्रदिनार्द्धा-

दपास्य चन्द्रस्य नतं विदध्यात्। तस्मात् त्रिप्रश्नोक्त्या रविच्छाया-कर्णवत् चन्द्रस्य तात्कालिकच्छायाकर्णमानयेत्। ततः क्रान्त्य-न्तरस्य क्रान्त्यैक्यस्य वा या जीवा प्राग्गृहीता तां चन्द्रच्छायाकर्ण-गुणितां स्वदेशलम्बज्यया भजेत्ततो लब्धं यत्फलमङ्गुलाद्यं सा छाया-वृत्तपरिणताऽग्रा भवति। तस्याश्च रविक्रान्त्या चन्द्रक्रान्तेर्भिन्ना-शायामैक्ये तुल्याशायां चान्तरे चन्द्रक्रान्तिशेषे च चन्द्रक्रान्तिवशेनैव याम्योत्तरा वा दिग् ज्ञेया। रविक्रान्त्यवशेषे तु विपरीता। यद्युत्तरा रविक्रान्तिरवशिष्टा तदा तस्या अग्राया याम्या दिक् ज्ञेया। याम्या चेदुत्तरा चेति। सा अग्रा याम्यैर्विषुवच्छायाङ्गुलैर्दिगैक्ये युता दिग्भेदे चोना कृता चान्द्रो भुजो भवति। एतदेवोत्तरे श्लोकेनोक्तम्—

अवशेषे विधुक्रान्तेः क्रान्त्यैक्ये चेन्दुदिग्भुजः।
रविक्रान्त्यवशेषे तु विपरीतदिशा भुजा ॥१॥

स च तात्कालिकयो रविचन्द्रयोरप मण्डलविमण्डलस्थयोर्याम्यो-त्तरमन्तरम्। अन्यदपि सवितुश्चन्द्रस्य वा यथासम्भवं दिग्मध्यस्थे स्वच्छायाग्रे स्वक्रान्तिज्यातः स्वच्छायाकर्णेनैवमेव भुज आनेयः। स च पूर्वापराशङ्कुमूलान्तरम्। उपलक्षणं चैतदन्येषामपि ग्रहाणां भध्रुवकाणां चैवमेव भुज आनेयः। शङ्क्वग्रे स्वग्रहतारादर्शनायेति।

अथ वासना। रविशशिनोर्भिन्नैकदिशोर्भुजयोर्योगवियोगे रवि-शश्यन्तरे भुजो जायते। शुक्लपक्षादौ सदाऽस्तकालिकोऽर्क एव षड्भाभ्य-धिकोऽस्तलग्नं भवति। यस्मादर्कास्तकाले चन्द्रो दृश्यते। कृष्ण-पक्षान्ते त्वौदयिक एव रविरुदयलग्नम्। यतो रव्युदयकाले प्राच्यां चन्द्रो दृश्यते। अन्यदा तु यदा शृङ्गोन्नतिरन्विष्यते तदाऽपर-कपालस्थे चन्द्रे तात्कालिकास्तलग्नं प्राक्कपालस्थे च तात्कालिक-मुदयलग्नं अर्कं परिकल्प्य यथोचितं कार्यम्। अस्तकाले उदय-काले चार्कस्य क्षितिजासन्नत्वाच्छङ्कोरभावाच्छङ्कुतलाभावोऽतो-ऽग्रैवार्कभुजो भवति। चन्द्रस्य च क्षितिजादुपर्यवस्थितत्वात्

शङ्कुरुत्पद्यते। शङ्कौ च सति शङ्कुतलं स्याच्छङ्कुतलेन च समान्यदिशोर्युतोना चन्द्राग्रा चन्द्रभुजो भवति। तात्कालिकस्व-वृहच्छङ्कुः कोटिरत्र तु शङ्कुस्थाने द्वादशकः प्रकल्पितः। तदनुसारेण चन्द्रविम्बशयोर्भिन्नैकदिशायोर्योगवियोगो द्वादशाङ्गुलशङ्कुः परिणत उनिपद्यो द्वादशकस्य च शङ्कोः शङ्कुतलं सदैव विषुवच्छाया। तस्य चाग्रया सह समान्यदिशोर्योगश्च यः पूर्वं कर्त्तुमुचितः स पश्चादुपनिवद्ध इति। तत्र चितिजे सममण्डलाहोरात्रवृत्तयोर्यावदन्तरं तत्र येंऽशास्तेषां या ज्या साऽग्रेत्युच्यते। तावति दूरे सममण्डलात्पूर्वेणार्कोदयोऽपरेण च तावत्येवास्तमयः। तत्प्रमाणं सूत्रं द्विगुणं कृत्वा तस्यैकमग्रं स्वाहोरात्रचितिजसम्पाते बद्धा द्वितीयमग्रं सममण्डलादन्यस्यां दिशि नीत्वा तावत्येवान्तरे चितिजे बध्नीयात्तदर्द्धमग्रा। एवं पूर्वेणापरेणाप्येवमेव भूमध्यविनिर्गतसममण्डलचितिजस्वस्तिकप्रापिसूत्रेऽग्रासूत्रसम्पातं मध्ये कृत्वाऽग्रातुल्यव्यासार्द्धेन याम्योत्तरायतवृत्ते तत्क्रान्तिज्या कोटिः। चितिज्या भुजोऽग्राकर्ण एवं स्थिते त्रैराशिकेन तदानयनम्। यदि लम्बज्याकोटेस्त्रिज्या कर्णस्तत्क्रान्तिज्याकोटेः क इति लब्धमग्रा। एवमर्काग्रामानीय चन्द्रस्याप्यग्रामानयेत्ततः स्वाग्रायाः स्वशङ्कुतलेन सह समान्यदिशोर्योगवियोगे कृते स्वभुजो भवति। भुजश्च ग्रहयुतस्वाहोरात्रप्रदेशसममण्डलयोरन्तरज्या। ततो यद्येको ग्रहः पूर्वापराया उत्तरेण स्थितो द्वितीयश्च दक्षिणेन स्वभुजाग्रे तदा तयोर्भुजयोर्योगतुल्यमन्तरं तयोरथ द्वावपि स्वस्वभुजाग्रस्थौ पूर्वापराया एकस्यां दिशि दक्षिणेनोत्तरेण वा भवतस्तदा तद्भुजयोर्यदन्तरं तदेव तयोर्बिम्बकेन्द्रान्तरं याम्योत्तरम्। अत्र तु प्रथममेव क्रान्त्योर्योगान्तरमुपनिबद्धम्। तस्माच्च या अग्रा तदुभयोरग्रान्तरं भवति। यतः प्रथमं पश्चाद्वाऽन्तरमेव साध्यम्। उभयथाऽपि न कदाचित्फले क्षतिः। भुजस्य च दिक्परिकल्पना चन्द्रस्थानवशेन युज्यते। यतः कर्णगत्याऽर्करश्मयश्चन्द्रबिम्बमुद्योत-

यन्ति । अतः क्रान्त्योर्भिन्नदिशोर्योगे समदिशोरन्तरे चन्द्रक्रान्ते-राधिक्ये सति चन्द्रक्रान्तिदिगेवान्तरस्य युज्यते भुजस्यापि तन्मूल-त्वात्तस्येति । चन्द्रक्रान्तेरूनतायां भुजस्य व्यस्तदिक्त्वम् । यतोऽर्क-चन्द्रभुजान्तरं चान्द्रा भुजा । सा च क्रान्तिमूलाग्रतो द्वयोर्ग्रहयोरेक-दिक्कयोः क्रान्त्योर्यस्य क्रान्तिरल्पा भवति स तस्मादितरस्यां दिशि दृश्यते । अत उत्तरायां चन्द्रक्रान्तौ लघीयस्यां चन्द्रादुत्तरेण रवि-र्भवति । तद्बिम्बमध्याच्च भुजादिशि दृश्यते । अत उत्तरायां चन्द्र-क्रान्तौ चन्द्रस्य य सा रवेर्दक्षिणा भवत्येवं दक्षिणायां क्रान्तावुत्तरेति । अथाग्रान्तरात् भुजानयनम् । तत्र प्रथमं त्रैराशिकम् । यदि लम्बज्या-कोटेस्त्रिज्या कर्णस्तदर्कचन्द्रयोः क्रान्तियोगान्तरज्याकोटेः क इति फलमग्रायोगान्तरम् । ततो द्वितीयम् । यदि चन्द्रच्छायाकर्णस्य द्वादशकः शङ्कुस्तत्त्रिज्याकर्णस्य क इति लब्धं तात्कालिकश्चन्द्रशङ्कुः । सर्वस्यैव बृहच्छङ्कोः स्वल्पस्य महतो वा त्रिज्यैव कर्ण इति । ततस्तृती-यम् । यद्येतस्य चन्द्रशङ्कोरिदमग्रायोगान्तरं भुजा तत् द्वादशकस्य शङ्कोः क इति । अत्र प्रथमत्रैराशिकेन लम्बज्या भागहारः । त्रिज्या-क्रान्तिज्यान्तरे गुण्यगुणकौ । द्वितीये चन्द्रच्छायाकर्णो भागहारो द्वादशशङ्कुत्रिज्ये गुण्यगुणकौ । तृतीये चन्द्रशङ्कुर्भागहारः* । प्रथम-त्रैराशिकस्य द्वादशगुणितस्य यतो भाजकराश्योः कृते चन्द्रच्छाया-कर्णौ गुणको द्वादशकत्रिज्ये भाजकौ जातौ ततोऽधो द्वादशक-त्रिज्ययोर्भागहारगतराश्योरुपरि गुण्यगुणकराशिगतयोश्च द्वादशक-त्रिज्ययोः समत्वान्नाशे क्रान्तियोगान्तरस्य चन्द्रच्छायाकर्णौ गुणकौ लम्बज्या भाजकः । फलमग्रायोगान्तरं भुजावयवरूपम् । तस्य च याम्यजा विषुवद्भा† । यथा द्वादशशङ्कोः शङ्कुतलेन सहैकदिशि योगे-ऽन्यदिशि चान्तरे सति चान्द्रो भुजो भवति । यतः पूर्वापराशङ्कु-

* "अग्रायोगान्तरं द्वादशकस्य गुण्यगुणकौ" इति पङ्क्तिस्त्रुटिरिवाभाति ।

† "याम्यजविषुवच्छायया संस्कारः कृतः" । इति पाठः सङ्गतो विभाति ।

मूलान्तरं भुजा स्वोदयास्तसूत्रशङ्कुमूलान्तरं शङ्कुतलम्। तच्च निरक्षदेशादुत्तरतो देशेषु ग्रहस्य दिवा दक्षिणत एव भवति। ग्रहरात्रौ चोत्तर एवेति। क्षितिजे स्वाग्राप्रमाणे याम्योत्तरसूत्रे प्रागपरयोः प्रसार्य तदग्रावगाहि पूर्वापरमुदयास्तसूत्रं न्यसेत्। यतो यदि ग्रहस्य स्वदिने पूर्वापराया उत्तरेण शङ्कुमूलं तदोत्तराग्रातः शङ्कुतलं शोधयितुं युज्यते। यत उदयकाले शङ्कुतलस्याभावः। सममण्डलप्रवेशकाले चाग्रातुल्यं तद्भवत्यथोत्तरगोलस्थेऽपि ग्रहे यदा पूर्वापरतो दक्षिणेन शङ्कुमूलम्। पूर्वापरातो दक्षिणेनोत्तरेण च शङ्कुतलं तस्मादुत्तरामग्रां विशोधयेदथ ग्रहरात्रिस्तदोदयास्तसूत्रादुत्तरेण शङ्कुतलं भवति। तेन तदाऽग्राशङ्कुतलयोर्योगः क्रियते। यतः पूर्वापरतस्तावति दूरे ग्रहो वर्त्तते। अथ दक्षिणलोले ग्रहस्तदाऽग्राशङ्कुतलयोस्तद्दिवसे योग एव युज्यते। यतः पूर्वापरातो दक्षिणेनोदयास्तसूत्रं ततश्च दक्षिणेन शङ्कुतलम्। अथ दक्षिणगोले च रात्रौ तदा स्वोदयास्तसूत्राच्छङ्कुतलस्योदक्स्थितत्वात् अग्रातः शङ्कुतलं शोधयितुं युज्यत इत्यतो विषुवच्छायाग्रान्तरयास्तुल्यान्यदिशोर्योगवियोगे चान्द्रभुज इत्युपपन्नम्।

अथ कोटिकर्णसितानयनाय छायाकर्णातिदेशाय च सार्द्धामार्यामाह।

**यत्रेन्दुर्द्वादशकः कोटिस्तद्वर्गयुतिमूलम् ॥३॥**
**कर्णोऽर्कचन्द्रयोरन्तरांशकास्तिथिविभाजिताःशुक्लम्।**
**कर्णेन चन्द्रबिम्बे द्वादशके सूर्यवच्छाया ॥४॥**

भुजाग्रात्पूर्वस्यामपरस्यां च यत्र चन्द्रः स्थितस्तत्र द्वादशाङ्गुला कोटिर्ज्ञेया। तयोर्भुजकोट्योर्वर्गयोगाद्यन्मूलं स कर्णो भवेत्। तथाऽर्कचन्द्रयोर्येऽन्तरांशास्ते च सितपक्षे तात्कालिकचन्द्रात्तात्कालिकमर्कं विशोध्यान्तराद्ग्राह्याः। असितपक्षे तु तात्कालिकार्कात्ता-

त्कालिकं चन्द्रं विशोध्यान्तरांशा गृह्यन्ते। रविसन्निधेरेव शुक्लप्रवृत्तेः। तत उभयेऽपि तिथिभिः पञ्चदशभिर्भाजिताः शुक्लं भवति। तच्च कर्णेन कर्णगत्या द्वादशाङ्गुलप्रमाणे चन्द्रबिम्बे भवति। तदा प्राग्य-दुक्तं चन्द्रच्छायाकर्णेनेति तत्रैव प्रश्नोत्तराय यथा सूर्यस्य त्रिज्या चरार्द्धजोवेत्यादिविधिना छायाकर्णं * आनीतः तथैवात्रापि स्वोप-करणैरानेतव्य इति। अत्र कर्णस्यैवातिदेश उपपन्नः कर्णशब्दस्तु वृत्तभङ्गभयान्नोक्तः। छायानयनं च त्रिप्रश्नेऽपि कर्णमूलमेवोक्तम्।

अत्र वासना। रविचन्द्रयोर्यत् पूर्वापरमन्तरं सा कोटिरित्युच्यते। भुजाया द्वादशाङ्गुलपरिणतत्वात् द्वादशाङ्गुलैव प्रकल्पिता। चन्द्र-बिम्बमानमपि तावदेव। कर्णानयने तु त्रयस्त्रैरोत्रगणितवासनैव। सितानयनं तूच्यते। यदाऽर्कचन्द्रयोरन्तरे चक्रार्द्धं भवति तदाऽस्मद्दृश्यं यच्चन्द्रगोलार्द्धं तत्सर्वं शुक्लं भवति सूर्यरश्मिभिरभि-व्याप्तत्वात्। अवान्तरे तु न्यूनं तदर्द्धम्। अतस्त्रैराशिकम्। यदि चक्रार्द्धतुल्यैरशीतिशतेन रविचन्द्रान्तरांशैर्द्वादशाङ्गुलानि चन्द्रमान-तुल्यं शुक्लं भवति तदेष्टदैवसिकैरन्तरांशैः कियदिति। अत्र गुण्यभागहारयोर्द्वादशभिरपवर्त्तने गुण्ये रूपं भाजके तिथयः। फल-मिष्टदिने शुक्लं भवति तच्च कर्णमार्गेणैव देयम्। यतः कर्णगत्यैव रविरश्मयो जलगोलरूपं चन्द्रबिम्बमुद्योतयन्ति। उक्तञ्च।

सलिलमये शशिनि रवेर्दीधयो मूर्च्छितास्तमो नैशम्।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥

तथा च ब्रह्मसिद्धान्ते।

रविदृष्टं सितमर्द्धं कृष्णमदृष्टं यथाऽऽतपस्थस्य।
कुम्भस्य तथाऽऽसन्नं रवेरधःस्थस्य चन्द्रबिम्बस्य॥

---

* अत्रादर्शपुस्तके "छायाकर्णविधिना इत्याह" इति पाठस्तदयमनुपयुक्त इव प्रतिभाति।

त्यजतोऽर्कतलं शशिनः पश्चादवलम्बते यथा शौक्लम्।
दिनकरवशात्तथेन्दोः प्रकाश्यतेऽधः प्रभृत्युदयः॥
नाधःस्थयोर्न्न सितयोरासन्नत्वाद्रवेरसितम्।

इति। अथैषां भुजकोटिकर्णशुक्लबिम्बानां परिलेखायोत्तरे श्लोकाः।

बिन्दुं समभुवि न्यस्य रविरूपं तदग्रतः।
भुजो यथागतो देयः कोटिः पूर्वापरा ततः॥
चन्द्रे परकपालस्थे प्राग्मुखी प्राक्कपालगे।
प्रत्यग्मुखी तदग्रे तु बिन्दोः कर्णं निवेशयेत्॥
कर्णकोटियुतौ चन्द्रमण्डलं द्वादशाङ्गुलम्।
तस्मिन् न्यसेत्सितं कर्णगत्या तु बहिराननम्॥
तदग्राच्च पुनश्चन्द्रं द्वादशाङ्गुलमालिखेत्।
एतदाद्यन्तपदयोरर्कोनश्चन्द्रमा यदि॥

स्पष्टार्थाः। एवं सितासितपक्षयोरभीष्टकाले यदा तात्कालिकश्चन्द्रस्तात्कालिकार्कोनः सन्नाद्यन्तपदयोश्चक्रस्य प्रथमचतुर्थपदयोर्भवति तदेतद्भुजकोटिकल्पनम्। तच्च कृष्णाष्टम्यर्द्धात् शुक्लाष्टम्यर्द्धं यावत् सम्भवति। तत्र शुक्लत्वात् शृङ्गोन्नतिः। अथ कृष्णशृङ्गोन्नतावुत्तरे श्लोकः।

व्यर्केन्दौ मध्यपदगे भुजा देया विपर्ययात्।
कृष्णं लिखेत्सर्वमन्यत् पूर्ववत्षड्भयुग्लवि॥

अस्यार्थः। यदाऽर्कोनश्चन्द्रो मध्यपदयोर्द्वितीयतृतीयपदयोर्भवति तदा रविः षड्भयुक्तार्यो भुजा च विपर्ययाद्यद्युत्तरायाता तदा दक्षिणा देया दक्षिणा चेदुत्तरेति। कोटिस्तु भुजाग्रात् द्वितीयपदे पूर्वाभिमुखी तृतीये च प्रत्यङ्मुखी देया। कृष्णं च सषड्भार्कचन्द्रान्तरांशैः शुक्लवदानेयमन्यत्सर्वं पूर्ववदिति।

अत्र वासना। अमावास्यान्ते रविचन्द्रावेकस्मिन्नपमण्डलभोगे भवतस्तदनन्तरमतिशीघ्रत्वाच्चन्द्रो यथा यथा रवेरग्रतो याति तथा तथा रविरश्मयश्चन्द्रगोलस्योपरि भागे शुक्लत्वमुपचिन्वन्ति। अपराह्णे घटस्येव आतपस्थस्य। एवं च तावद्यावत् शुक्लाष्टम्यर्द्धम्। तत्रास्मद्दृश्यचन्द्रगोलार्द्धं शुक्लं भवति। चन्द्रगोलस्य चतुर्थो भागः द्वितीय चतुर्थभागस्य यः शुक्लः स न दृग्विषयमेति। तस्यास्मदृश्यचन्द्रगोलार्द्धावस्थितत्वात्। येन यस्यामेव दिश्यर्कस्तस्यामेव सितमतस्तत्र यथागतैव भुजा देया शुक्लायां शृङ्गोन्नतौ। प्रथमपदस्थे व्यर्कशशिनि * चतुर्थपदे त्वमावास्यान्तादर्वाक् स्थिते चन्द्रे द्वितीयपदे तु शुक्लाष्टम्यर्द्धादूर्द्ध्वं प्रतिदिनं कृष्णमल्पं भवति यावत्पौर्णमासि तत्र सकलमपि बिम्बं शुक्लं भवति। तदनन्तरं कृष्णाष्टम्यर्द्धं यावत् तृतीयपदे प्रतिदिनं कृष्णमुपचितं भवति। तत्रावश्यमर्काद्विपरीतायां दिशि भवति। अतो भुजदानं द्वितीयतृतीयपदयोर्विपरीतं न युज्यते। चन्द्राच्च यद्यपरतो रविरासन्नस्तत्पूर्वेण कोटिः कल्पयितुं युक्ता पूर्वेण चेत्तदपरतो विम्बार्द्धतुल्येऽन्तरे कृष्णस्य विपरीतायां दिशि स्थितत्वात्। रवेरर्द्धचक्रतुल्येऽपमण्डलप्रदेशे तस्यामेव दिशि भुजकोटिकर्णः प्राग्वत्तैतं दर्शयेत्। अत एव रवेस्तत्र षड्भाधिक्यनिर्दिष्टं तत्र चन्द्रपरिधिकर्णसम्पातात् कृष्णं परिलेख्यमिति। अथामावास्यासन्नकालादन्यत्रेष्टशृङ्गोन्नतौ यो विशेषस्तदर्थमुत्तरं श्लोकः।

इष्टशृङ्गोन्नतौ लग्नमेव सूर्यं प्रकल्पयेत्।
प्राक्चन्द्रे षड्भयुक् पश्चात्तस्मात्प्राग्वत्स्थितं विना ॥

अयमर्थः—इष्टकालशृङ्गोन्नतिप्रश्ने प्राक्कपालस्थे चन्द्रे तात्कालिकलग्नमेव सूर्यः कल्पनीयः। पश्चात् स्थिते च तत् षड्भयुक्तार्यम्।

---

* "प्रथुक्तितपदः शुक्लाष्टम्यर्धं यावत् प्रतिदिनं शुक्लमुपचितं भवति" इति पङ्क्तिस्त्रुटिरिवाभाति।

शुक्रं तु यथास्थितादेवार्कादानेयम्। अन्यच्च शृङ्गोन्नतिविषयं सर्वमुक्तवदेवेति। तथा च शिष्यधीवृद्धिदतन्त्रे।

प्राक्कपालयुजि शीतदीधितौ
लग्नमिष्टसमयात्समानयेत्।
योजयेच्च भदलेन पश्चिमे
साधयेद्रविवदग्रकां ततः॥१॥

इति पण्डित—महादेवात्मज आमशर्मविरचिते खण्डखाद्यक-वासनाभाष्ये शृङ्गोन्नत्यधिकारः सप्तमः॥ ग्रन्थः १६०॥

---

अथ ग्रहयुत्यधिकारो व्याख्यायते। तत्रादावेव भौमादीनां ताराग्रहाणां विक्षेपानयनातिमन्दगतित्वात् स्थिरानेव करणादिकालीनांश्चक्रच्युतपातांशानार्यार्द्धेनाह।

**कृतयमवसुरसदशकाः पातांशा दशगुणाः कुजादीनाम्।**

कृताश्च यमौ च वसवश्च रसाश्च दशकाश्च एते तथोक्ताः कृतादयो दशगुणिता यथाक्रमं कुजादीनां पातांशा ज्ञेयाः। तत्र भौमपातांशाश्चत्वारिंशत् ४०। बुधस्य विंशतिः। २० गुरोरशीतिः ८०। शुक्रस्य षष्टिः ६०। शनेः शत १०० मिति। अतिमन्दगतित्वात् करणादिकालिका एवैते आर्यभटतन्त्रे निबद्धा इति।

अथैतेषामेव कुजादीनां स्वस्वकक्षामण्डलेषु स्वस्वविमण्डलस्थानां स्वस्वशीघ्रनीचोच्चवृत्तमध्यानां अपमण्डलेन सह ये विप्रकर्षास्तत्प्रतिपादनाय द्वितीयमार्यार्द्धमाह।

नवतिथिरसार्कसूर्या विक्षेपकला गुणा दशभिः ॥१॥

नव च तिथयश्च रसाश्चार्काश्च सूर्याश्च ते तथोक्ताः नवतिथ्यादयो दशगुणाः कुजादीनां यथासङ्ख्यं मध्यमा विक्षेपकलाभवन्ति। तत्र कुजस्य नवति ९० कला विक्षेपः। बुधस्य सार्द्धशतम् १५०। गुरोः षष्टिः ६०। शुक्रस्य विंशत्यधिकशतम् १२०। शनेरपि तद्वेव १२० त्यत्रागमोपलब्धिरेव वासना। तत्र स्ववृत्तमध्यविक्षेपवशात् शीघ्र-नीचोच्चवृत्तपरिधिः प्रतिमण्डलपरिधेर्विच्छिन्नो भवति। तत्र चावश्यं ग्रहेण भवितव्यम्। अतो यावान् विक्षेपः स्वशीघ्रनीचोच्चवृत्तमध्यस्य तावान् ग्रहस्यापि स्यात्। यदि तस्यामेव दिशि कक्षामण्डल-प्रतिमण्डलसम्पाते ग्रहः स्यात्। अथ कक्षामण्डलादुपर्यधो वा ग्रहो भवति तत्कक्षावृत्तवशात् विक्षेपकला या उक्तास्ता भिद्यन्ते। एवं कुजगुरुसौराणाम्। बुधशुक्रयोश्च स्वशीघ्रनीचोच्चवृत्तमध्यस्य स्व-शीघ्रप्रतिमण्डलोच्चतया सह यावान् विप्रकर्षस्तावानेव प्रतिमण्डल-परिधौ यत्र तत्र स्थितग्रहस्यापि यावति च दूरे तत्र प्रदेशे विषुवन्मण्ड-लादपमण्डलं तावती क्रान्तिस्ततश्च विमण्डलं यावत्तावत्यः स्फुट-विक्षेपकला इति केवलमुपर्यधः कृतो भेद इति ॥

अथ कुजादीनां स्फुटबिम्बमानविक्षेपानयनार्थं स्वस्वशीघ्रकर्णा-नयनमाह।

केन्द्रज्याऽन्त्यफलज्यागुणिता फलजीवया हृता कर्णः।
त्रिज्याऽन्त्यफलज्योना चक्रार्द्धे संयुता चक्रे ॥२॥

ग्रहस्य स्पष्टीक्रियमाणस्य चतुर्थशीघ्रकर्मणि या तात्कालिकी शीघ्रकेन्द्रज्या सा परमफलज्यागुणिता सती चतुर्थशीघ्रफलजीवया भक्ता फलं शीघ्रकर्णो भवति। यदि च शीघ्रकेन्द्रं चक्रार्द्धतुल्यं भवति तदा ज्याया अभावात् त्रिज्या परमफलज्यातो हीना सती शीघ्रकर्णो भवति। चक्रतुल्ये शीघ्रकेन्द्रे त्रिज्या परमफलज्यया युता शीघ्रकर्णो भवति।

अत्र वासना। त्रैराशिकेन। तत्र प्रथमम्। यदि त्रिज्यातुल्यपरमकेन्द्रज्ययाऽन्त्यफलज्या लभ्यते तदेष्टकेन्द्रज्यया केति फलं भुजफलज्या। ततो द्वितीयं मानान्तराद्वास्तम्। यदि फलज्यायास्त्रिज्या कर्णस्तद्भुजफलज्यायाः क इति। अत्र प्रथमे त्रिज्या भागहारो द्वितीये गुणकार इति द्वयोरपि समत्वान्नाशे केन्द्रज्याया अन्त्यफलज्या गुणकः। फलज्या च भाजकः। फलं कर्णो भवति। भुजफलज्या नीचोच्चवृत्ते कर्णाग्रे भवति। फलज्या च व्यासार्द्धवृत्तपरिणता तत्र कर्णः। एवं च फलज्योत्पत्तेर्वैपरीत्येन कर्णोत्पत्तिः। तद्यथा। केन्द्रज्यान्त्यफलज्ययोर्घातस्तावत्कर्णभक्तः फलज्या भवति। स च फलज्याभक्तः कर्णो भवति। चक्रतुल्ये च केन्द्रे कक्षामण्डलान्त्यफलज्यया प्रतिमण्डलस्योच्चता तत्परिधौ च स्फुटग्रहोऽतोऽन्त्यफलज्यया युता सती त्रिज्या कर्णो भवति। कर्णो हि ग्रहमध्यभूमध्यान्तरालम्। षड्राशितुल्ये च केन्द्रे कक्षामण्डलात् प्रतिमण्डलस्यान्त्यफलज्ययाऽधः स्थितत्वात्तया हीना सती त्रिज्या कर्णो भवतीति।

अथ कुजादीनां यथाक्रमं मध्यमबिम्बमानार्द्धलिप्ताप्रतिपादनपूर्वकं तासां स्फुटीकरणमाह।

**द्विस्तिस्रोऽर्द्धचतस्रः कलाश्चतस्रो दलाधिके द्वे च।**
**स्फुटमानकला गुणिता व्यासार्द्धेन स्वकर्णहृताः॥३॥**

द्विप्रभृतयो यथाक्रमं मध्यमबिम्बमानार्द्धलिप्ता भवन्ति। तत्र द्वे कले कुजस्य बिम्बमानार्द्धप्रमाणम्। तिस्रो बुधस्य। अर्द्धोनचतस्रो गुरोः। चतस्रः शुक्रस्य। सार्द्धे द्वे कले शनेरिति। एतास्त्रिज्यया गुणिताः स्वस्वशीघ्रकर्णेन भक्ताः स्फुटमानार्द्धकला भवन्ति। अत्रार्द्धशब्दं विना मानार्द्धस्यैव लिप्ता ज्ञेयाः। त्रिज्ययोः कर्णस्य च स्वस्ववृत्तव्यासार्द्धात्सकलत्वात्।

अत्र वासना। ग्रहस्य कक्षामण्डलप्रतिमण्डलसम्पाते स्थितस्य क्षितिजे उदग्च्छतो बिम्बस्य प्राणरूपस्य प्रमाणमाकलय्य मध्यमा बिम्बकलाः पूर्वाचार्यैरुपलब्धास्तासां च कर्णवशेन स्फुटीकरणम्। यतः प्रतिमण्डलस्य परमोच्चप्रदेशस्थस्य ग्रहस्य महति कर्णे भूमितो दूरस्थत्वाद्बिम्बं स्वल्पं प्रतिभासते। परमनीचस्थस्य च स्वल्पे कर्णे भूम्यासन्नत्वाद्बिम्बं महत्प्रतिभासते। अतोऽवान्तरे मानान्तरत्वाद्ग्रस्तत्त्रैराशिकेन बिम्बकलानां स्फुटीकरणम्। यदि त्रिज्यातुल्यकर्णे एता बिम्बकलास्तदिष्टशीघ्रबिम्बकर्णे कियदिति फलं स्फुटमानकला भवन्ति।

अथ ग्रहयोर्युतेरतीतानागतत्वपरिज्ञानायाह।

**भुक्त्यन्तरयुतिभाजितमनुलोमविलोमविवरमाप्तदिनैः।**
**अधिकेऽल्पगतावेष्यत्यधिकगतौ ग्रहयुतिरतीता ॥४॥**

दृष्टदिने ययोर्ग्रहयोर्युतिरन्विष्यते ताविष्टकालिकौ स्फुटीकृत्य तयोरन्तरं लिप्तीकार्यम्। ततोऽस्य सूत्रस्यावतारोऽनुलोमेति। अनुलोमौ च विलोमौ च अनुलोमश्च विलोमश्चेति वा तयोर्विवरमन्तरं भुक्त्यन्तरयुतिभाजितम्। अन्तरं च युतिश्चान्तरयुतौ भुक्त्योरन्तरयुतौ ताभ्यां यथासम्भवं भाजितम्। अयमर्थः। यदि द्वावपि ग्रहावनुलोमौ प्राग्गतौ भवतः। विलोमौ पश्चाद्गतौ वा तदा तयोर्विवरं तयोरेव भुक्त्यन्तरेण भाज्यम्। अथैकोऽनुलोम ऋजुगतिरन्यश्च विलोमो वर्त्तते तदा तयोर्यदन्तरं तत्तयोरेव भुक्तियोगेन भजेदुभयथाऽपि दिनानि लभ्यन्ते। तैराप्तैर्दिनैः कृत्वा मन्दगतौ ग्रहेऽपमण्डलभोगेनाधिके सति ग्रहयोर्युतिरेष्यतीति वाच्यम्। शीघ्रगतौ ग्रहेऽधिकेऽतीतेति।

अत्र वासना। यदा द्वावपि ग्रहौ प्राग्गतौ अपरगतौ वा भवतस्तदा तयोर्गत्यन्तरतुल्येनाध्वना प्रतिदिनं शीघ्रगतिरन्तरमपचिनोति।

अतः कालानयने तावानेव दिनभोगः। यदा त्वेको वक्री तदा तयोर्विलोमानुलोमगतित्वाद्गति तुल्येनाध्वना द्वावप्यन्तरमुपचिनुतः। अतस्तयोर्गतियोग एव दिनभोगः। तेन च कालानयनं त्रैराशिकेन। यदि भुक्त्यन्तरतुल्येन वा दिनभोगेनैकं दिनं तद्ग्रहान्तरेण किमिति। फलमपमण्डलभोगेन संयुतः कालः। स च ऋजुगत्योर्ग्रहयोरधिकगतावधिकेऽतीतो युज्यते। तदन्तरस्य प्रतिदिनमधिकत्वात्। ऊनगतौ चाधिक एष्यो युज्यते। प्रतिदिनं तदन्तरस्यापचयात्। वक्रिणोः पुनरधिकगतावधिकेऽन्तरेण प्रतिदिनमपचीयते। ऊनगतौ चाधिकेऽतीतो यतस्तदन्तरं प्रतिदिनं भुक्त्यन्तरेणोपचीयते। अपरगतित्वादेकस्मिंश्च वक्रिणि तस्मिंश्चाधिके भावी कालः। प्रतिदिनं भुक्तियोगेन ग्रहयोः परस्परानुप्रवेशादूने च वक्रगतौ अतीतोऽपरगतित्वात्तस्येत्येवं यदि फलदिनानां मध्ये वक्रानुवक्रौ सम्भवतस्तत्सम्भवे च स्वधियैवोह्यमिति।

अथ ग्रहयुतेरतीतानागतत्वे ज्ञाते ग्रहयोः समलिप्तीकरणमार्ययाह

**विवरं स्वभुक्तिगुणितं पृथक् तयैवोद्धृतं चयोऽतीते।**
**धनमेष्यति समलिप्तौ वक्रगतेः चयधनं व्यस्तम् ॥५॥**

ग्रहयोरनुलोमयोर्विलोमयोर्वाऽनुलोमविलोमयोर्वा यदन्तरं कलादि तत् द्वयोरपि स्वस्वभुक्त्या गुणितं तथैव प्राग्वद्भुक्त्यन्तरेण भुक्तियोगेन वा यथार्हं भक्तं कार्यम्। ततो लब्धं यत्फलं कलादि तदतीते ग्रहयोगे ज्ञाते ऋणं कार्यमेष्ये च धनम्। एवं कृते ऋजुग्रहौ द्वावपि समलिप्तौ भवतः। वक्रगतेः पुनर्ग्रहस्य चयधनं व्यस्तं विपरीतं कार्यम्। अतीते ग्रहयोगे ज्ञाते धनमेष्ये चर्णमिति। एकस्मिंश्च वक्रिणि यदि ऋजुगतेर्ग्रहस्य फलं धनं कृतं तद्वक्रिण ऋणम्। ऋणं चेदृजुगतेस्तद्वक्रिणो धनमिति। अत्र फलं त्रैराशिकेन। यदि भुक्त्यन्तरेण भुक्तियोगेन वा दिनभोगेन चेद्ग्रहः स्वभुक्तितुल्या

लिप्ताः प्राग्याति तद्ग्रहान्तरेण कियत्य इति । शेषा वासना च प्राग्वदिति ।

अथ प्रागुक्तानां कुजादिपातानां स्पष्टीकरणायोत्तरे आर्यामाह ।

ग्रहवद्बुधसितपातौ तृतीयलब्धाधिकोनकौ स्पष्टौ ।
कुजजीवसौरपाताश्चतुर्थफलसंस्कृता ग्रहवत् ॥

बुधशुक्रयोः स्पष्टीक्रियमाणयोस्तृतीयमन्दकर्मणि यत्फलं तत्पातयोः प्रागुक्तयोर्देनमृणं वा ग्रहवदेव कार्यम् । बुधस्य शुक्रस्य च तृतीयमन्दकर्मणि यन्मन्दफलं तद्यदि धनं संस्कृतं तदा तत्पातयोरपि धनं कार्यम् । ऋणं चे दृणमित्यर्थः । कुजजीवसौराणां तु पाताश्चतुर्थेन शीघ्रफलेन ग्रहवत्संस्कार्याः । एवं कृते स्वस्वपाताः स्फुटा भवन्ति ।

अत्र वासना । कक्षामण्डले मेषादेरारभ्य यावति दूरे मन्दस्फुटो ग्रहो भवति तत्र शीघ्रनीचोच्चवृत्तमध्यम् । तत एव मेषादेः प्रातिलोम्येन यावति दूरे स्वविमण्डलापमण्डलसम्पातस्तत्र मध्यमपातव्यपदेशः । तयोश्चानुलोमविलोमभोगराश्योर्यो योगः स स्वविमण्डलापमण्डलयुतिस्वशीघ्रनीचोच्चवृत्तयोरन्तरं भवति । ततो यदि स्फुटग्रहे विलोमपातभोगो योज्यते तदा तदनन्तरं शीघ्रफलेन धनर्णसंस्कारवशात् अधिकमूनं भवति । तदर्थमादावेव तच्छीघ्रफलं पाते विपरीतं क्रियते । विलोमभोगत्वात् पातस्य । अत्र तु तस्य चक्रच्युतस्य निर्दिष्टत्वात् ग्रहवदेव संस्कार्यमेवं पातः स्पष्टो भवति । यदा तु मन्दस्फुट एव ग्रहे विलोमपातभोगो योज्यते तदा किमपि नान्तरं भवत्यतस्तदा तस्मान्मध्यमेनैव पातेन विक्षेपानयनं कार्यम् । यतः शीघ्रनीचोच्चवृत्तस्य मध्यवशात्तत्परिधिस्थितो ग्रहोऽपि विक्षिप्तो भवत्येवं कुजगुरुसौराणाम् । चन्द्रस्तु मन्दकर्मणैव स्फुटोऽतो न तद्भोगपातयोगे किमप्यन्तरं भवति । बुधशुक्रयोः पुनः

स्वशीघ्रमध्यवशात्तत्परिधिस्थितो ग्रहोऽपि विक्षिप्तो भवति। प्रतिमण्डलोच्चरेखया सह यत्र कक्षामण्डलस्य सम्पातस्तत्र स्वशीघ्रनीचोच्चवृत्तमध्यस्य यावान् विक्षेपस्तावान् यत्र तत्र स्थस्य ग्रहस्याप्यतस्तत्र प्रतिमण्डलपरिधौ मेषादेरारभ्य यावान् मन्दस्फुटस्वशीघ्रस्यानुलोमभोगो यावांस्तत्र पातविलोमभोगस्तयोर्योग्यतो मन्दफलेन पातस्य संस्कारो युज्यते। येन स्वविमण्डलापमण्डलयुतिमन्दस्फुटस्वशीघ्रयोरन्तरं भवतीति।

अथ स्फुटविक्षेपानयनार्थमार्यामाह।

**स्वं स्वं विशोध्य पातं समलिप्तात्सौम्यशुक्रयोः शीघ्रात्।**
**जीवा विक्षेपगुणा हृताऽन्त्यकर्णेन विक्षेपः ॥६॥**

कुजगुरुसौराणां प्रत्येकं गणितागतग्रहात् स्वस्वस्फुटपातं विशोध्य सौम्यशुक्रयोश्च स्वस्वशीघ्रोच्चात् स्वस्वस्फुटपातं विशोध्य केन्द्रं ज्ञातव्यम्। तस्य जीवा स्वस्वविक्षेपकलागुणा सती स्वस्वशीघ्रकर्णेन भाज्या। ततो लब्धं यत्फलं स ग्रहस्य स्फुटविक्षेपो भवति। समलिप्तादित्युपलक्षणार्थम्। तेनेष्टकालिकादप्येवमेव विक्षेपानयनम्। स च षड्राश्यूने केन्द्रे उत्तरः। षड्राश्यधिके दक्षिण इत्यत्र स्पष्टग्रहस्थानमारभ्य विलोमगत्या ये स्पष्टपातांशास्तत्र विमण्डलापमण्डलसम्पातस्तथा मेषादेरनुलोमो यत्र स्पष्टग्रहस्तयोरुभयथा विलोमानुलोमयोर्यो युतिः स स्वपातोनो ग्रहो भवति। चक्रच्युतत्वात्पातस्य। तस्य च त्रिज्यातुल्यभुजज्यया मध्यमा विक्षेपकला भवन्ति। ताभिस्त्रैराशिकद्वयेन स्फुटविक्षेपोपपत्तिः। तत्र प्रथमम्। यदि त्रिज्यातुल्यकेन्द्रज्यया स्वशीघ्रनीचोच्चवृत्तमध्यस्यापमण्डलेन सह मध्यमविक्षेपकलातुल्यमन्तरं तदिष्टकेन्द्रज्यया कियदिति। फलमिष्टकेन्द्रप्रदेशस्थस्य स्वशीघ्रनीचोच्चवृत्तमध्यस्य विक्षेपः। स च कक्षामण्डलादुपर्यधः स्थित्या

ग्रहस्य भिद्यते तदर्थं द्वितीयम्। यदि व्यासार्द्धवृत्ते एतावान् विक्षेपस्तच्छीघ्रकर्णवृत्ते कियानिति। एतच्च व्यस्तम्। मानान्तरत्वात्। यतो महति वृत्तेऽल्पा विक्षेपकला:। स्वल्पे च महत्य:! तेन व्यासार्द्धं गुणक: शीघ्रकर्णो भाजक:। एवं सति प्रथमे व्यासार्द्धं भागहारो द्वितीये गुणकारस्तयो: समत्वान्नाशे केन्द्रज्यया मध्यमविक्षेपकला गुणक: शीघ्रकर्णो भाजक:। फलं स्फुटविक्षेप:। केन्द्रस्य च प्रथमे राशिषट्के प्रथमं विमण्डलार्द्धमपमण्डलादुत्तरेण भवत्यतस्तत्रोत्तरो विक्षेपो द्वितीये च राशिषट्के द्वितीयमर्द्धं दक्षिणेनेति तत्र दक्षिण इत्युपपन्नम्॥

अथाधमण्डलभोगेन तुल्ययोर्ग्रहयोरन्तरपरिज्ञानाय मानैक्यार्द्धादूने ग्रहान्तरे परस्परबिम्बानुप्रवेशसम्भवे सतीतिकर्त्तव्यतातिदेशाय शशिग्रहयोगे च चन्द्रविक्षेपस्फुटीकरणाय चार्यामाह।

**विक्षेपयोर्विशेषैक्यमेकभिन्नाशयोर्ग्रहान्तरकम्।**
**ग्रहणवदन्यत्साध्यं स्फुटविक्षेपोऽवनत्येन्दो:॥७॥**

एका च भिन्ना च ते आशे ययोर्विक्षेपयोस्तयोर्यथासङ्ख्य यद्विशेषैक्यं तद्ग्रहाणामन्तरं भवति। अयमर्थ:। समानग्रहविक्षेपयोरेकदिशोरुत्तरयोर्दक्षिणयोर्वा यो विशेषोऽन्तरं भिन्नाशयोश्च यदैक्यं संयोगस्तदुभयोर्ग्रहयो: स्वस्वबिम्बमध्ययोर्याम्योत्तरमन्तरं भवति। तत्र च काले ग्रहयोर्भिन्नदिग्विक्षेपयोर्यथादिशं दिगवस्थानं स्पष्टमेव। एकदिग्विक्षेपयोश्च विक्षेपान्तरे कृते यस्याधिको विक्षेप: स स्वविक्षेपदिशि तिष्ठति। द्वितीयश्च तस्मादितरस्याम्। बिम्बान्तरे च या लिप्तास्तासां षष्ट्या हस्तकल्पना पौलिशादिषु दृष्टा। तदनुसारेणाङ्गुलादि कल्पनीयम्। अत्र चेष्टकालिकग्रहयोरपि मन्दकर्म कृत्वैव समलिप्तीकरणं तथा तयोर्विक्षेपौ ततस्तदन्तरैक्यं वा कार्यम्। अन्यथा दृग्गणितविसम्वाद: स्यात्। तथा च भास्करीये सिद्धान्तशिरोमणौ।

दृक्कर्म कृत्वाऽयनमेव भूयः
साध्येति तात्कालिकयोर्युतिर्यत्॥
एवं कृते दिविचरौ ध्रुवसूत्रसंस्थौ
स्यातां तदा वियति सैव युतिर्निरुक्ता।
दृक्कर्मणाऽयनभवेन न संस्कृतौ चेत्
सूत्रे तदा त्वपमवृत्तजयाम्यसौम्ये॥

एवं च तदा यदा युतिग्रहयोर्बिम्बमध्यान्तरं मानैक्यार्द्धादूनं भवति। यदा च मानैक्यार्द्धादूनं तदा ग्रहयोः परस्परबिम्बानुप्रवेशस्तत्र च सति रविग्रहणवल्लम्बनावनत्यादि विधेयम्। शशिग्रहणसमानमेवेन्दोर्विक्षेपः स्यात्। स चोक्तवत् स्फुटः कार्यः। अवनतिश्च तात्कालिकचन्द्रवित्रिभयुतिविशेषभागज्यां मनुभि १४र्हत्वा खाब्धिभि-४० र्भजेच्चन्द्रावनतिर्भवेत्तथेन्दोरित्युपलक्षणम्। ताराग्रहयोगे ग्रहयोः स्वस्वस्फुटविक्षेपौ स्वस्वावनत्या संस्कृतौ स्फुटीकरणायार्हौ भवतः। एतदुक्तं भवति। ताराग्रहेन्दूनां बिम्बयोः परस्परानुप्रवेशे सति समलिप्तकालममावास्यान्तं परिकल्प्य तत्र रविलग्नं कार्यम्। तद्वित्रिभं विधाय तस्माद्रविग्रहोक्तविधिनाऽवनतिद्वयमानीय तेन स्वस्वविक्षेपं स्फुटीकृत्यान्तरीकृत्य तयोरेकान्यदिशोरन्तरसंयोगौ कृत्वा यो राशिः स स्थित्यर्द्धविमर्दार्द्धानयनाय स्फुटविक्षेप उच्यते। शेषं स्वोपकरणै रविग्रहदर्शितविधिना कार्यम्। अत्र च रविकक्षायां ग्रहयोर्ग्रहनक्षत्रयोर्वा कक्षान्यत्वाद्योजनकर्णभेदोऽतो लम्बनावनत्योरप्यन्यथात्वमतो रविग्रहोक्तविधिनोत्पन्नलम्बनावनतौ स्वस्वान्तरसमुत्पन्नगुणगुणे सत्यौ ग्रहयुत्युचिते भवतः। अतो गुणकानयनायोत्तरे श्लोकाः।

ग्रहयोगेऽर्कवत्कृत्वा लम्बनावनती ततः।
निघ्ने स्वगुणकेनैव ग्रहयुत्युचिते च ते॥

ग्रहयोर्मध्यमे भुक्ती गुणिते त्रिभजीवया ।
स्वकलाकर्णसंभक्ते लब्धयोरन्तरं च यत् ॥
हिष्ठं क्रमाद्भजेद्गत्योर्ग्रहयोश्चन्द्रसूर्ययोः ।
स्पष्टमध्यविशेषेण लम्बनस्य नतेर्गुणः ॥३॥

अयमर्थः । ययोर्ग्रहयोर्युतिरन्विष्यते तयोर्मध्यमे भुक्ती पृथक् पृथक् त्रिज्यया गुणिते स्वस्वशीघ्रकर्णेन भजेत्ततो ये लब्धे कलाद्ये फले तयोरन्तरं स्थानद्वये विन्यस्यैकत्र रविचन्द्रयोर्ग्रहयोः स्पष्टभुक्त्यन्तरेण भजेल्लब्धं लम्बनस्य गुणकः । अन्यत्र तु तयोरेव मध्यमभुक्त्यन्तरेण भजेल्लब्धं अवनतेर्गुण इति ।

अत्र वासना । ग्रहयोर्योजनकर्णस्थाने मध्यमभुक्तिं प्रकल्प्य तया व्यस्तत्रैराशिकेन स्फुटभुक्ती आनयेत् । यदि त्रिज्याकर्णतुल्ये कर्णे मध्यमभुक्तिर्भवति तत्स्वशीघ्रकर्णवृत्ते कियतीति फलं पृथक् पृथक् स्पष्टे भुक्ती भवतः । तयोरन्तरं कृत्वा तेन पुनस्त्रैराशिकम् । यदि रविचन्द्रयोः स्फुटभुक्त्यन्तरेण एतावल्लम्बनं तदनेन स्फुटग्रहभुक्त्यन्तरेण कियदिति । अत्र ग्रहस्फुटभुक्त्यन्तरं गुणकस्तदमुमेव रविचन्द्रभुक्त्यन्तरेण भक्त्वा ततो लब्धं यत्फलं स एव लम्बनस्य गुणकः प्रकल्पितो वैचित्र्यार्थं फलं तु परमार्थतस्तदेव । एवमवनतेरपि रविचन्द्रमध्यमभुक्त्यन्तरेणेति । लम्बनस्य स्पष्टग्रहनिष्पन्नत्वात् स्पष्टभुक्त्यन्तरेण तद्गुणकानयनमुचितम् । अवनतेस्तु मध्यमभुक्त्यन्तरेणैवेत्येवं लम्बनमवनतिश्च स्वस्वगुणकगुणे स्वस्वकक्षापरिणते भवत इति ।

अथ ग्रन्थोपसंहारार्थमार्यामाह।

**इति खण्डखाद्यकमिदं तुष्टार्थं ग्रहगतिक्षुधार्त्तानाम्**
**शिष्यहिताय प्रोक्तं जिष्णुसुत-ब्रह्मगुप्तेन ॥८॥**

स्पष्टार्थेयमार्या।

इति पण्डित-महादेवात्मज-आमशर्मविरचिते खण्डखाद्यक-वासनाभाष्ये ग्रहयुत्यधिकारोऽष्टमः। ग्रन्थसंख्या ७०० ॥*

॥ शुभमस्तु श्रीरस्तु ॥

---

* इतोऽग्र मूलपुस्तके "भग्रहयुतौ खण्डखाद्यकोत्तरश्लोकाः। नागाः कृतिः सप्तविंशत् साष्टाविंशतिलिप्तिकाः" ....इत्यादयः पञ्च श्लोका ब्राह्मस्फुटसिद्धान्तोक्तभभ्रुवकप्रतिपादकास्तदनन्तरं "नक्षत्राणां शरांशानाह। सौम्या दशार्काधिशरा" इत्यादयो नवश्लोकाश्च तथैव ब्राह्मस्फुटसिद्धान्तोक्तागस्त्यलुब्धकभ्रुवकादिप्रतिपादका अपूर्णा लुप्ताक्षराश्च विद्यन्ते न च किमपि टीकाकर्त्तुरुपसंहारवाक्यं विद्यत इति कदाचित् किञ्चिदवशिष्यतं वासनाभाष्यमिति प्रतीयते। तत्रैव च कदाचिदुपपादनपटोरामराजस्य वंशपरिचयः समयोल्लेखोऽपि भवितुमर्हतीति।

# खण्डखाद्यकस्य शुद्धिपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| तत्त्वतो बुद्धा | तत्त्वतो बुद्ध्वा | १ | ३ |
| विधटिका | विघटिका | ३ | १६ |
| खाभ्रवह्नि | खाभ्रवह्नि | ५ | १७ |
| त्र्ययतिथि | त्र्यगतिथि | ८ | ४ |
| द्वादश | द्वादश | ११ | ६ |
| भबन्ति | भवन्ति | ११ | ७ |
| यत | यत् | १३ | १९ |
| लिखितपुस्तके | आदर्शपुस्तके | १३ | टिप्पण्याम् |
| चन्द्रोच्चस्य | चन्द्रोच्चस्य | १६ | ६ |
| समण्डलं | भमण्डलं | २४ | २३ |
| तत्केन्द्रच | तत्केन्द्रं च | ३१ | २२ |
| प्रतिराशिं | प्रतिराशि | ३१ | २५ |
| प्युपयोच्यते | प्युपयुज्यते | ३३ | २ |
| स्थितव | स्थितैव | ३७ | १८ |
| सगणे | भगणे | ३९ | १७ |
| रवितन्द्रयो | रविचन्द्रयो | ४२ | १० |
| चक्रं वा | चक्रं वा | ४३ | १३ |
| क्रान्तिर्विधेयां | क्रान्तिर्विधेया | ४३ | १४ |
| विबरात् | विवरात् | ४३ | २३ |
| पूर्व | पूर्वं | ४३ | २३ |
| चिह्नं | चिह्नं | ४४ | ६ |
| रविमण्डले | विमण्डले | ४५ | ३ |
| रविचंद्र | रविचन्द्र | ४६ | ७ |
| चापचंद्र | चापचन्द्र | ४६ | १८ |
| तत्त्वध्या | तत्पध्या | ४६ | १९ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| तुव्यं | तुल्यं | ४७ | २ |
| स एब | स एव | ४७ | ८ |
| षट्कोऽत: | षट्कमत: | ४९ | २३ |
| चन्द्रस्थ | चन्द्रस्य | ५१ | ५ |
| तदस्तरं | तदन्तरं | ५३ | १ |
| विपरोत | विपरीत | ५४ | १३ |
| कृगाङ्गरामा | कृताङ्गरामा | ५६ | ८ |
| खनागा: | खनगागा: | ५८ | १७ |
| शिव्यधो | शिष्यधो | ५९ | ७ |
| शुक्रस्व | शुक्रस्य | ६२ | १६ |
| केन्द्रांश: | केन्द्रांशं: | ६३ | ९ |
| धनर्णस्व | धनर्णस्व | ६३ | १० |
| लिखितपुस्तकं | आदर्शपुस्तके | ६४ | टिप्पण्याम् |
| प्राकेन्द्रांशेषु | प्राक्केन्द्रांशेषु | ६५ | २० |
| नगेद्वदिश | नगेद्वादिश | ६६ | १ |
| पूर्वस्ता | पूर्वस्था | ६८ | १६ |
| तदृत्तमध्यं | तद्वृत्तमध्यं | ६८ | २२ |
| खशोघ्रोच्चा | खशीघ्रोच्चा | ६८ | २४ |
| फत्तज्या | फलज्या | ६९ | १६ |
| तत्स्यष्ट | तत्स्पष्ट | ६९ | २३ |
| पश्चाट्टश्यतं | पश्चाद्दृश्यते | ७५ | ५ |
| भागानाभुक्ति: | भागागामुक्ति: | ७२ | १० |
| ३१ | ३९ | ७२ | २२ |
| क्ष्येकै | त्रेरकै | ७३ | १ |
| द्वादिश | द्वादश | ७३ | १३ |
| विंशत्या | विंशत्या | ७४ | १ |
| ग्रहस्प | ग्रहस्य | ७५ | १८ |

| अशुद्धम् । | शुद्धम् । | पृष्ठ । | पङ्क्तौ । |
|---|---|---|---|
| घ्रोघ्र | शोघ्र | ७६ | ११ |
| कालक्कांयो | कालच्छायो | ७८ | १० |
| वृत | वृत्त | ७८ | १५ |
| तस्थ | तस्य | ७९ | ४ |
| यद्द्वितोयं | यद्द्वितोयं | ८० | ८ |
| धोपते | धोयते | ८१ | ११ |
| पूर्वा | पूर्वा | ८२ | १८ |
| ज्यथा | ज्यया | ८३ | २ |
| छाथा | छाया | ८३ | १० |
| परस्परछाया | परस्परच्छाया | ८४ | ८-९ |
| ज्वितीयान्तर | द्वितोयान्तर | ८४ | ९ |
| ?ाक्य | प्राच्य | ८४ | १९ |
| नापविता | नापचिता | ८५ | ७ |
| वच्यचमाण | वच्यमाण | ८६ | २२ |
| ताक्कालिका | तात्कालिका | ८९ | ९ |
| स्वदेशजा | स्वदेशचितिजा | ८९ | २२ |
| स्तदिन | स्तद्दिन | ९० | १३ |
| घठिका | घटिका | ९१ | १५ |
| श्लो० सं ८ | ७ | ९८ | २० |
| घणाणां | घणाणां | ९९ | ४ |
| तदाऽनांशा | तदाऽयनांशा | १०६ | १७ |
| तावस्तेवा | तावत्येवा | ११६ | १२ |
| श्लो० सं १६ | १७ | ११६ | २० |
| श्लो० सं १७ | १८ | ११७ | २२ |
| पूर्वस्यैव | सर्वस्यै | १२६ | ४ |
| ३१९१४२ | २१९१४२ | १२७ | टिप्पण्याम् |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| कृपाणय इति | कृपाणय इति स्वल्पान्तरम् | १२७ | टिप्पण्याम् । |
| शक | शक्र | १४३ | ४ |
| रौर्णमास्यां | पौर्णमास्यां | १५० | १६ |
| भूम्यच्छाय | भूम्यच्छाय | १५२ | ५ |
| श्लो० सं २ | ६ | १६० | १२ |
| सयेमिति | सेर्यमिति | १६३ | ८ |
| लोले | गोले | १८१ | ११ |
| प्रशुक्लितपद | शुक्लप्रतिपदः | १८४ | टिप्पण्याम् । |
| ग्रद्युत्य | ग्रहयुत्य | १८५ | ८ |
| रेष्यतीति | रेष्येति | १८८ | २२ |
| मावौ | भावौ | १८९ | १० |
| द्वितोयं | द्वितीयं | १९२ | १-२१ |
| थदि | यदि | १९४ | ११ |

एतदतिरिक्तास्च बहुत्र ब, व एतयोर्विपर्ययस्तथा पदच्छेदव्यत्यासश्च तथा तृतीय, पञ्चम, सप्तमेषु पृष्ठेषु "खण्डखाद्यकम्" इत्यत्र शीर्षकस्थाने "वासनाभाष्यसहितम्" इत्यपि नोल्लिखितमिति सुधीभिः स्वयमेव शोधनीयमिति ॥